अखिलभारतीयसंस्कृतविद्यापीठ-प्रकाशनम् — १

# पुराण-पारिजातः

( भारतसर्वकारस्यानुदानेन प्रकाशित )

भूमिकालेखक —

अनन्तश्रीविभूषितः स्वामी करपात्रमहाराजः

लेखक —

म. म. गिरिधरशर्मा चतुर्वेदी

प्रधानसम्पादक —

डा० मण्डनमिश्रः शास्त्री, एम ए, पी-एच डी

सम्पादक —

श्रीशिवदत्तशर्मा चतुर्वेदी, एम ए, साहित्यव्याकरणाचार्य



अखिलभारतीयसंस्कृतविद्यापीठम्, दिल्ली

## समर्पणपत्रम्

भारतीयसंस्कृते, विश्वशान्ते, भारतीयजनतायाश्च
चिरसञ्चितानाम् आशानाम्, उज्ज्वलस्य च भविष्यस्य
केन्द्रविन्दुभूतस्य भारतप्रधानमन्त्रिण, अखिल
भारतीयसंस्कृतविद्यापीठशासननिकायस्य चाध्यक्षस्य

**श्रद्धेयस्य श्रीलालबहादुरशास्त्रिणः**

करकमलयो सादर समर्पयति

**बलीरामभगतः**
योजनामन्त्री भारतसर्वकारस्य

प्रधानमन्त्रिनिवास
दिल्ली, ७ अगस्त, १९६५

अनन्तश्रीविभूषितानां श्रीकरपात्रस्वामिचरणानां—

# भूमिका

इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद् वेदो मामयं प्रहरिष्यति ॥
पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हातव्यानि हेतुभिः ॥

पुराणपारिजातस्य विद्यास्कन्धो नाम द्वितीयं प्रकरणं मम सम्मुखमुपस्थितम् । अस्य प्रणेता महामहोपाध्यायो गिरिधरशर्मा चतुर्वेदः । अनेन च विदुषा व्याकरणमधीतं, मन्त्रब्राह्मणात्मकेषु समग्रेषु वेदेषु नितान्तं परिश्रान्तम्, षडङ्गान्यालोडितानि, दर्शनानि गुरुभ्यः स्वयं च सुशिक्ष्यावगतानि आगमा निभालिता । आचरिताचारः धर्माणाम् । 'चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति' इति पारमर्षं वचनं समन्वेत्यमुम् । पुराणानि भगवतो वेदस्य प्रहरिण । श्रीकृष्णद्वैपायनस्य, 'अचतुर्वदनो ब्रह्मा द्विबाहुरपरो हरिः । अभाललोचनः शम्भुर्भगवान् बादरायणः' इत्येवं निश्रुतस्य व्यासस्य तपांसि, ज्ञानविवर्तानि, व्याकृतया ब्रह्मणा विश्वनिर्माणरहस्यस्य विलसितानि । निखिलपुरुषार्थसाधनेषु, ग्रथितधार्मिकतत्त्वेषु, विस्तृतदर्शनव्याख्यानोपव्याख्यानेषु, प्रतिपदं विविधचमत्कारपरिपूर्णेषु समुन्मीलितजगत्सृष्टिस्थितिसंहारविधानवैभवेषु खल्वेषु पुराणमहाग्रन्थराशिषु आपाततो विलसदनेकवैमत्येषु येषु निश्रतिरचन्ते माध्या वैतानिकाश्च सर्वज्ञस्य परमेश्वरस्य सृष्टिकर्तृत्वे, विरुन्धन्ति ज्यौतिषिका धरायाः आदर्शरूपतायां सूर्यस्य मेरुमभितः पर्यविभ्रमणप्रथा सञ्जायमानयोः उत्तरायणदक्षिणायनयोः, विवदन्ते दार्शनिकाः परमतत्त्वसमीक्षायां, मुह्यन्ति वैदिकम्मन्याः प्रामाणिकत्वे, ग्लायन्ति भौगोलिकाः द्वीपादिमस्याससमुद्भावने । नात्र साधारणाना-

मल्पज्ञानामश्रद्धालूनामपरिशीलितशास्त्रीयविवेचनापारिपाट्यानाम् प्रवेश सफल सम्भवति। स्वर्णसौरभसयोग इव गिरिधरशर्माऽत्र समुपलब्ध । अस्य महीयानयं सरम्भ ध्रुव फलेग्रहोस्यादिति सुदृढो मे विश्वास । परिहृता स्यु सर्वे विरोधा , समाहिता स्युर्निखिला शङ्का , मार्जितानि भवेयु समस्तानि वैमत्यानि । यत्पर शब्द स शब्दार्थ इति न्यायेन निष्कले निरञ्जने सर्वभेदातीतेऽद्वितीये ब्रह्मणि परम चरम चैदम्पर्य पुराणानाम् । 'हरि सर्वत्र गीयत' इति हि तेषा डिण्डिमघोष । सर्वथैव तेषा समन्वय परस्पर वेदैश्च । विवृतमेतत्सनातनधर्मोद्धारादिनिबन्धेषु विवरीष्यते चात्र निबन्धेऽपि बहुत्र । क्वचिदाध्यात्मिकप्रक्रियया अन्यत्राधिभौतिकप्रकारेण, इतरत्राधिदैविकप्रसङ्गेन कुत्रचन वैष्ण्यादिभक्तिपारवश्येन सर्वं एवाभ्याप्त समाहिता समाधायिष्यन्ते च ।

अस्मिश्च पुराणपारिजातस्य द्वितीयऽवयवे सृष्टिप्रक्रिया विस्तरश उपवर्णिता । तत्र साङ्ख्य, वेदान्त , भगवान् शंकराचार्य , श्रीरामानुजाचार्य , श्रीवल्लभाचार्य , शैवागम , विद्यावाचस्पतिरेतदीय आचार्य , विभिन्नानि पुराणानि च समुपष्टब्धानि । वैज्ञानिकैश्च चर्चा समुत्थाप्य तत्र पौराणिक टिप्पणमुट्टङ्कितम् । विद्यावाचस्पतेर्विशेषा समुद्धिशान्त्यानन्दादिभि प्रकरणैर्गूरिशा रमणीयतामावहन्ति । आशासे विश्वेश्वरस्य भगवत अन्नपूर्णा-जानेरकम्पयानुकम्पया सपूर्णतामचिरेणासादयन्निबन्धोऽय पारिजाताऽ पारिजात स्यात्, पुराणबद्धपरिकराया सनातनधर्मश्रद्धाममोघामाभजन्त्या आयजनताया सर्वकामजाया पूरयिता कल्पवृक्ष एव प्रादुष्यात ।

—करपात्रस्वामी

श्रावण शुक्ल ३ }
वत २०१५ वि० }

# सम्पादकीयम्

अखिलभारतीयसंस्कृतविद्यापीठस्य प्रकाशनमालायां प्रथमपुष्पतया पुराणपारिजातस्येमं भागं प्रकाशयत् तत् किमपि गौरवमिवात्मन्यनुभवति। इदं संस्कृतविद्यापीठम् अखिलभारतीयसंस्कृतसाहित्यसम्मेलनस्यैव महिमशालिनी प्रवृत्तिरस्तीति नाविदितं विदितवेदितव्यानाम्। सम्मेलनस्य संस्थापकेषु महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदानां किमपि गरिमाञ्चितं पदं विद्यते। संस्कृतविद्यापीठयोजनाया अपि तत्रभवन्तः प्रमुखप्रवर्तका एवाभवन्। इत्थं विद्यापीठसम्मेलनाभ्यामुभाभ्यामपि साकमेतेषां विद्वद्गरिष्ठानां घनिष्ठाऽऽत्मीयताऽस्तीति प्रथितचरम्। अस्यां स्थितौ विद्यापीठप्रवर्तितायां प्रकाशनमालायां समुपक्रमोऽपि तैरेव लिखितेन पुस्तकेन सम्पद्येतेत्यस्मादधिकतरः कतरः सौभाग्यावसरः स्याद् विद्यापीठस्य।

एतामात्मीयतामन्तरापि नूनमस्माकं गौरवान्वयस्य प्रचुराणि कारणानि सन्ति। महामहोपाध्यायश्रीगिरिधरशर्मचतुर्वेदा भारतस्य तेषु विख्याततमेषु विद्वत्स्वन्यतमा वर्तन्ते, यैरयं देशो गर्ववान् भवितुमर्हति। सहस्राधिकैः शिष्यैः, शताधिकैः संस्थानैः भूयोभिर्लेखैः, प्रभूतैश्च व्याख्यानैरस्य राष्ट्रस्य भारतीयायाः संस्कृतेः संस्कृतस्य च जागरणे महत्त्वशाली योगस्तैः प्रदत्तः, यः सर्वथाऽतुलनीय एव वर्तते। तेषामिमा सेवा राष्ट्रस्य विभिन्नैर्वर्गैः काले काले सविशेषं सममान्यन्त। ब्रिटिशशासनकाले भारतसर्वकारेणैते महामहोपाध्यायपदवीप्रदानेन, स्वतन्त्रे च भारते राष्ट्रपतिना विशिष्टेन सम्मानपत्रेण, 'साहित्य एकादमी' संस्थानेन च संस्कृतविद्वत्सु सर्वप्रथमतया पञ्चसहस्ररूप्यकात्मकेन सर्वोच्चेन साहित्यकार-पुरस्कारेण व्यभूष्यन्त। काशीस्थहिन्दूविश्वविद्यालयेन 'वाचस्पति' पदेन प्रयागस्थेन हिन्दीसाहित्यसम्मेलनेन च 'साहित्यवाचस्पति' पदव्या चतुर्वेदमहाभागाः

सदक्रियन्त । एवं विधाना सुप्रतिष्ठता विदुषा कृतिर्विद्यापीठेन प्रकाशनार्थं प्राप्येतेत्यतो महतो हर्षस्य विषय को नामान्य सम्भवति ।

प्रस्तुता कृति श्रीचतुर्वेदचरणैं कृतस्य पुराणाना गम्भीरस्य माहात्म्यशालिनश्च चिन्तनस्य परिणतिर्वरीवर्ति । गतेम्य पञ्चदशाधिकम्य संवत्सरेभ्य पुराणानामनुशीलनं विधाय तैरासन्नसहस्रद्वयेषु पृष्ठेषु किमप्यगाध विवेचन समुपन्यस्तमस्ति । तस्य प्रथमो भाग 'काशिराजन्यासे' प्रकाशनार्थ प्रदत्त, द्वितीयस्तावदयम् । अस्मिन् भागे सृष्टे, दाक्ने, सच्चिदानन्दलक्षणस्याऽऽत्मन स्थापनाया, सत्त्वरजस्तमसा गुणाना च विवेचनादिकैर्विषयैर्गूढगूढतराणि रहस्यानि वैज्ञानिकया समन्वयात्मिकया च सरण्या प्रस्तूय महामहोपाध्यायै काचिन्नूतना दृष्टि सहृदजगत समक्षमुपस्थापिता विद्यते ।

विशेषत पुराणाना सम्बन्धे एतादृश विवेचन भृशमपेक्ष्यते । 'इतिहासपुराणाभ्या वेद समुपबृ हयेत् ।' इत्यादिसूक्तै प्रतिपादित पुराणाना महत्त्व कतिभ्यश्चिद् शताब्दीभ्यो मलिनयितु दुर्मेधस प्रायतन्त । नूनमिदमास्माकीनस्य राष्ट्रस्य कृतेऽपराधुनमेवाजायत । वैदिके ज्ञानविज्ञाने लौकिकस्वरूपप्रदानेन पुराणैर्मानवजीवनस्य सान्निध्यमानेतु यन्महनीय कर्म सम्पादितम्, तस्य निष्क्रयमिद राष्ट्र कदाचिदपि दातु न पारयिष्यतीति सत्यम् । वस्तुतो भारतीयाया सस्कृतेर्यत् स्वरूप वयमद्य निरूपयाम, तस्य प्रतिष्ठापकानि पुराणान्येव । पुराणान्येव शताब्दीर्यावदाम्माकीनाना काव्यानाम्, शास्त्राणा चिन्तनाना वा प्रेरणास्रोतास्ययसन्त । इत्थम्भूतस्य शाश्वतजीवनीयस्य स्रोतस सम्बन्धो यदि कुतश्चन राष्ट्रात् वरमाच्चना वा साहित्याद् विच्छिद्यते, तदा ततोऽधिक विमपीतरद् अपशकुन न सम्भाव्यते । अनया दृष्ट्या पुराणाना चिन्तनमाने तदीयनस्थानाऽन्व प्रतानानमस्मिन्युगे कियन्महत्त्वमावहत इति लेखनमनपेक्षितम् ।

ममैष हर्षप्रकर्षहेतुर्यद् विद्यापीठेनेद मूल्यवत्यमङ्गीकृतम् । तेनाऽस्मन

# अनुक्रमणिका



—:०:—

॥ श्रीः ॥

# पुराण-पारिजातः

## विद्यास्कन्धः

यदीय     करुणाद्भुतप्रकटलास्यलक्ष्मीलयं-

जन गुणगुणाधिनरियविपरीतमेव तारं हरेत् ।

महीरभुवनोद्भवस्थितिनिलयाच यल्लीलया-

भूयं कमलया मुदा कुशल्यानमीडे हरिम् ॥ १ ॥

# अनुक्रमणिका



—: ० :—

अथ भाव —पूर्वं सर्गस्त्रिविध प्राकृत , वैकृत , मिश्रश्च । साङ्ख्य-दर्शने हि एकामूलप्रकृति , सप्त प्रकृतिविकृतय , षोडशविकारा , एकस्तु पुरुषोऽप्रकृतिविकृति —इति चत्वारो वर्गा सर्वेषा तत्त्वाना कृता । तत्र मूलप्रकृति प्रकृतिविकृतिरित्युभयमपि प्रकृतिशब्देन गृहीत्वा तैरुत्पादित सर्ग प्राकृत उच्यते । विकृतिशब्देनोक्तैर्महाभूतैरिन्द्रियैश्चोत्पादित प्राणिसर्गो वैकृत उक्त । यद्यप्यनुग्रहसर्गो वक्ष्यमाण प्राकृत एव वस्तु युक्त , पर भूतानीन्द्रियाणि चाश्रित्य तुष्टिसिद्ध्यादीना स्वरूपसंघटनात्स वैकृतेषु गण्यते । यत्र तु विकृतिसहकृताया प्रकृते कर्तृत्वम्, सोऽयं मिश्र प्राकृतवैकृत इति । तत्र महत्सर्गो ब्रह्मसर्गो वा प्रथम , ( अनैशाविद्यासर्गोऽप्यन्तर्भवतीति वायवे उक्तम् ) भूतसर्गो द्वितीय , ऐन्द्रियकस्तृतीय , इति त्रय प्राकृता सर्गा । वृक्षादीनाम्, पश्वादीनाम् देवाना मनुष्याणामितिचत्वार प्राणिसर्गा । बुद्धि भेदाना तुष्टिसिद्धिशक्तीना सात्विकस्तद्विपरीतानामतुष्ट्यसिद्ध्यशक्तीना च तामस इत्येषोऽनुग्रहसर्ग इति पञ्चवैकृता । कौमार सर्गस्तु प्राकृतवैकृत , यतोहि—

> भूतादिकाना भूताना षष्ठ सर्ग स उच्यते,
> ते परिग्राहिण सर्वे सविभागरतास्तु ते ।
> चोदना आप्यशीलाश्च ज्ञेया भूतादिकास्तु ते ।

इत्येव विवृत , तदिदमग्रे स्फुटीभविष्यति । त एते नवसर्गविभागा केषुचित्पुराणेषु स्मृता । श्रीमद्भागवते तृतीयस्कन्धे दशमाध्याये [illegible] वैलक्षण्य दृश्यते । तत्र हि महत सर्ग , अहङ्कारसर्ग , भूतसर्ग , इन्द्रियसर्ग , वैकारिको देवसर्ग , तमस सर्गश्चेति षट् प्राकृता सर्गा उक्ता । मुख्यपदवाच्यो वृक्षादिसर्ग , तिर्यक्सर्ग मनुष्यसर्गश्चेति त्रयो वैकृता , इत्येव

# सृष्टि-वल्ली

## [ सृष्टि-भेदाः ]

सर्गं प्रतिसर्गं वंशानुवंश्यानुचरितं मन्वन्तराख्येषु पञ्चसु पुराणविषयेषु सर्गं एव मुख्यो विषयः । सोऽयं सर्गः सृष्ट्यपरपर्यायः पुराणेषु नवधा प्रस्तूयते । तदुक्तं पाद्मे सृष्टिखण्डे तृतीयाध्याये—

प्रथमो महतः सर्गो द्वितीयो ब्रह्मणस्तु यः ॥ ७६ ॥

तन्मात्राणां द्वितीयस्तु भूतसर्गो हि स स्मृतः ।
वैकारिकस्तृतीयस्तु सर्गश्चैन्द्रियकः स्मृतः ॥ ७७ ॥

इत्येष प्राकृतः सर्गः सम्भूतो बुद्धिपूर्वकः ।
मुख्यसर्गश्चतुर्थस्तु मुख्या वै स्थावराः स्मृताः ॥ ७८ ॥
तिर्यक्स्रोतास्तु यः प्रोक्तस्तिर्यग्योन्यः स उच्यते ।
ततोर्ध्वस्रोतसां षष्ठो देवसर्गस्तु स स्मृतः ॥ ७९ ॥

ततोऽर्वाक्स्रोतसां सर्गः सप्तमः स [illegible] मानुषः ।
अष्टमोऽनुग्रहः सर्गः सात्त्विकस्तामसस्तु यः ॥ ८० ॥

पञ्चैते वैकृताः सर्गाः प्राकृतास्तु त्रयः स्मृताः ।
प्राकृतो वैकृतश्चैव कौमारो नवमः स्मृतः ॥ ८१ ॥

एते तत्र समाख्याता नवसर्गाः प्रजापतेः । इति ।
एवमेव वैष्णवे प्रथमांशे ५ अध्याये, मत्स्यपुराणे च ।

अथ भाव —पूर्वं सर्गस्त्रिविध प्राकृत, वैकृत, मिश्रश्च। साख्यदर्शने हि एकामूलप्रकृति, सप्त प्रकृतिविकृतय, षोडशविकारा, एकस्तु पुरुषोऽप्रकृतिविकृति —इति चत्वारो वर्गा सर्वेषा तत्त्वाना कृता। तत्र मूलप्रकृति प्रकृतिविकृतिरित्युभयमपि प्रकृतिशब्देन गृहीत्वा तैरुत्पादित सर्गं प्राकृत उच्यते। विकृतिशब्देनोक्तैर्महाभूतैरिन्द्रियैश्चोत्पादित प्राणिसर्गो वैकृत उक्त। यद्यप्यनुग्रहसर्गो वक्ष्यमाण प्राकृत एव वस्तु युक्त, पर भूतानीन्द्रियाणि चाश्रित्य तुष्टिसिद्ध्यादीना स्वरूपसघटनात्स वैकृतेषु गण्यते। यत्र तु विकृतिसहकृताया प्रकृते कर्तृत्वम्, सोऽयं मिश्र प्राकृतवैकृत इति। तत्र महत्सर्गो ब्रह्मसर्गो वा प्रथम, (अत्रैवाविद्यासर्गोऽप्यन्तर्भवतीति वक्ष्यते उक्तम्) भूतसर्गो द्वितीय, ऐन्द्रियकस्तृतीय, इति त्रय प्राकृता सर्गा। वृक्षादीनाम्, पश्वादीनाम् देवाना मनुष्याणामितिचत्वार प्राणिसर्गा। बुद्धि भेदाना तुष्टिसिद्धिशक्तीना सात्त्विकस्तद्विपरीतानामतुष्ट्यसिद्ध्यशक्तीना च तामस इत्येषोऽनुग्रहसर्ग इति पञ्चवैकृता। कौमार सर्गस्तु प्राकृतवैकृत, यतोहि—

भूतादिकानां भूतानां षष्ठ सर्गं स उच्यते,
ते परिग्राहिण सर्वे सविभागरतास्तु ते।
चोदना आप्यशीलाश्च ज्ञेया भूतादिकास्तु ते।

इत्येव विवृत, तदिदमग्रे स्फुटीभविष्यति। त एते नवसर्गविभागा केषुचित्पुराणेषु स्मृता। श्रीमद्भागवते तृतीयस्कन्धे दशमाध्याये तु वैलक्षण्य दृश्यते। तत्र हि महत सर्ग, अहकारसर्ग, भूतसर्ग, इन्द्रियसर्ग, वैकारिको देवसर्ग, तमस सर्गश्चेति षट् प्राकृता सर्गा उक्ता। मुख्यपदवाच्यो वृक्षादिसर्ग, तिर्यक्सर्ग मनुष्यसर्गश्चेति त्रयो वैकृता, इत्येव

-स्वसर्गा । उभयात्मकस्य कौमारसर्गस्यापि योजने तु दश सर्गा भवन्तीति । एषामवान्तरभेदा अपि तत्र निरूपिता । श्री भगवद्वल्लभाचार्यचरणानुगामिभिः श्रीगोस्वामिपुरुषोत्तमैस्तु प्रस्थानरत्नाकरे पूर्वं कारणकार्यस्वरूपभेदेन त्रिविधत्व सृष्टेः प्रतिपाद्य ब्रह्म स्वरूपम् "बहुस्याम्" इतीच्छा-इति द्विविध स्वरूपम्, सच्चिदानन्दाविर्भाव कारणसृष्टिरेका, तत्र सदशा प्राण-लोकदेव-भूतानि, चिदंशौ जीवान्तर्यामिणौ, कार्यान्तरसृष्टिश्च नामरूपात्मिकेति त्रिविधा कार्यसृष्टि व्याकृत्य पोढा सृष्टिर्व्यवस्थापिता भागवताधारेण । तत्र च नामरूपसृष्टेरपि बहुविभागा प्रदर्शिता –द्रव्यम्, कर्म, काल , स्वभाव , जीव , इति पञ्चधा रूपसृष्टि , एका च नाम सृष्टिरिति । श्री गुरुचरणैर्विद्यावाचस्पतिमहाभागैस्तु वेदा , यज्ञा , प्रजा , लोका धर्मादचेति पञ्चाना सृष्ट्याना भेदात् पञ्चधा सृष्टि स्वग्रन्थेषु प्रतिपादिता । भूतसृष्टि लोकसृष्टावेव तेऽन्तर्भावयन्ति । तदित्थ वक्तुरिच्छया वर्गीकरणमनेकधा सम्भवति । सर्वतत्त्वसृष्टिप्रतिपादन एव सर्वेषा तात्पर्यम्, वर्गीकरण सौकर्याय यथा तथा वा भवतु, तत्र न कोऽपि विरोध । तदिह वयमपि प्रतिपादन सौकर्याय प्रकरणमिद पञ्चधा विभजामहे ( १ ) 'आदि सृष्टि ' भूतोत्पत्ते तन्मूलभूत तन्मात्रा-सृष्टेश्च प्राक् सर्वमत्र समावेश्यते । प्राणानाम् वैज्ञानिक वेदाना प्राणभेदानाम् ऋषिपितृ-देवादीना महदहकारादीना सृष्टिरत्रैवान्तर्भूता पुराणोक्तकौमारसर्गादपि चात्रैव सगृहीत ।

२—भूतसृष्टि (मूलभूताना तन्मात्राणा सृष्टिरप्यत्रैव सगृहीता स्यात्)

३—लोकसृष्टि ।

४—प्राणिसृष्टि ।

५—धर्मसृष्टिरिति । पुराणोक्तोऽनुग्रहसर्गोऽत्रैव संगृहीत वेदशास्त्राणां सृष्टिरप्यत्रैवान्तर्गता स्यात् ।

आसां सर्वासामपि सृष्टीनां तात्त्विकं विवरणं श्रुतिषु तु मन्त्रभूतमस्त्येव, श्रुतिमूलत्वात् सर्वेषां शास्त्राणाम् । यदि परोक्षविषयः श्रुतिषु न श्रुतोऽभविष्यत्, तर्हि शास्त्रान्तरेषु केनाधारेण प्रत्यपादयिष्यत । परं श्रुतिषु यज्ञाङ्गभूतकर्मणामुपपत्तये यज्ञाङ्गप्रशंसारूपेण वा सर्गा इमे तत्र तत्र ब्राह्मणेषु प्रतिपादिता इति उपक्रमेण सुस्पष्टं सृष्टिविवरणं नैकत्र सुलभम् । उपनिषत्सु यद्यपि भूतसृष्टिः प्राणिसृष्टिश्च तत्र तत्र प्रकरणे सबद्धा श्रूयते । परमतिसंक्षिप्ता । तत्राप्यात्मतत्त्वमेव मुख्यतया विवेच्यम्, सृष्ट्यादिकमङ्गभूतमेवेति । मन्त्रभागे त्रिशाणि सूक्तानि अन्यत्रापि केचन मन्त्राश्च सृष्टिप्रतिपादकानि सन्ति, परं तत्राप्यति संक्षेपेणैव श्रवणम् । दर्शनेषु तु केवलमादिसृष्टेर्धर्मसृष्टेश्च केचिदंशा-विविच्यन्ते । लोकसृष्टिः प्राणिसृष्टिर्वा न तत्र विचार्यते ।

स्मृतिषु भगवतामनुना प्रथमाध्याये लोकसृष्टिः प्राणिसृष्टिश्च विवृता । परं साप्यतिसंक्षिप्ता । आगमशास्त्रेषु तन्त्रयामलादिष्वप्यस्ति सृष्टिविवरणं प्रधानप्रतिपाद्योपासनाङ्गरूपेण । तस्मात् सर्वविधानां सृष्टीनां सोपक्रमम् सोपसंहारं क्रमबद्धं विस्तृतं वर्णनं प्रधानरूपेण पुराणेष्वेव लभ्यत-इति नात्र कस्याप्यालोचकस्य संशयः स्यात् । तस्मात् पुराणानामत्र विषये संक्षेपेण सिद्धान्तं दिङ्मात्रं प्रदर्शयितुमुद्यता वयमादिसृष्टिमेव प्रथमं प्रस्तुमः । सुतरां शास्त्रान्तरैश्चाप्यैकवाक्यता सम्पादयितुं यथाशक्ति प्रयत्येत । अयन्तु श्रीमद्वल्लभाचार्याणां सुबोधिनीबोधितः सृष्टिशब्दार्थः सततं सर्वैः स्मृतौ स्थाप्यः —

अनित्ये जननं नित्ये परिच्छिन्ने समागमः ।
नित्यापरिच्छिन्नतनौ प्राकट्यञ्चेति सा त्रिधा । इति ।

अर्थात्—यानि तत्वानि नित्यान्यपरिच्छिन्नानि च, तत्राविर्भावापरपर्याय प्राकट्यमेव सृष्टिशब्दार्थः । नित्येषु परिच्छिन्नेषु च परस्परम्, एकस्येतरेण वा सगमनं सृष्टिपदाभिधेयम् । अनित्येषु तु उत्पत्तिरेव सृष्टि । यद्यपि सत्कार्यवादे शास्त्रसम्मते उत्पत्तिरप्याविर्भावातातिरिच्यते तत्वत, पर व्यवहारदशायाम् तत्रोत्पत्तिरेव सर्वैरभ्युपगम्यत इति पृथगेवात्रार्थे सोक्ता । अनयैव रीत्या प्रकरणेऽस्मिन्नुपात्त सृष्टिशब्द सर्गशब्दो वा नाक्षेपयोग्य इति ।

## आदि सृष्टिः

### ( मूलतत्त्वनिरूपणम् )

तत्र तावत् सर्वस्याप्यनेक ब्रह्माण्डविस्तीर्णस्य मनसाप्याकलयितुमशक्यस्यानन्तभेदस्य स्थावर-जङ्गम-जडचेतनादि रूपस्य प्रपञ्चस्य मूलमेकमद्वितीय सद्-ब्रह्म ज्ञान-रसादिपदैरुपलक्षणीयं किमपि तत्त्वमिति श्रुत्यनुगामिना पुराणानामैकमत्येनोद्घोषित सिद्धान्त । यथा हि-पाद्मेस्वर्गखण्ड नाम्ना प्रसिद्धे सर्गखण्डे द्वितीयेऽध्याये सूतस्योक्ति —

आदिसर्गमहन्तावद् कथयामि द्विजोत्तमा ।
ज्ञायते येन भगवान् परमात्मा सनातन ॥ १ ॥

जगत प्रलयादूर्ध्वं नासीत्किञ्चिद्द्विजोत्तमा ।
ब्रह्मसज्ञमभूदेकं ज्योतिर्वै सर्वकारकम् ॥२ ॥

नित्यं निरञ्जनं शान्तं निर्मलं नित्यनिर्मलम् ।
आनन्दसागरं स्वच्छं यत्काङ्क्षन्ति मुमुक्षवः ॥ ३ ॥
सर्वज्ञं ज्ञानरूपत्वादनन्तमजमव्ययम् ।
अविनाशि सदा स्वच्छमच्युतं व्यापकं महत् ॥ ४ ॥
तस्मात्प्रधानमुद्भूतमित्यादि ।

पाद्मे सृष्टि खण्डेऽपि द्वितीयऽध्याये पुलस्त्यो भीष्ममाह स्म—

परं पराणां परमः परमात्मा पितामहः ।
रूपवर्णादिरहितो विशेषेण विवर्जितः ॥ ८५ ॥
अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः ।
गुणैर्विवर्जितः सर्वैः समस्तीति हि केवलम् ॥ ८६ ॥
सर्वत्रासौ समस्चापि असंस्तनुपमो मतः ।
भावयन् ब्रह्मरूपेण विद्वद्भिः परिपठ्यते ॥ ८७ ॥ इत्यादि ।

विष्णुपुराणे प्रथमांशे द्वितीयेऽध्याये—

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः ।
तदेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम् ॥ ६ ॥
विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम् ।
प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥ ७ ॥
कथयामि यथापूर्वं दक्षाद्यैर्मुनिसत्तमैः ।
दृष्टः प्रोवाच भगवानब्जयोनिः पितामहः ॥ ८ ॥
परः पराणां परमः परमात्मात्मसंस्थितः ।
रूपवर्णादिनिर्देशविशेषेण विवर्जितः ॥ ९ ॥

अपक्षयविनाशाभ्यां परिणामर्धिजन्मभिः ।
वर्जितः शक्यते वक्तुं यः सदास्तीति केवलम् ॥ १० ॥

सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः ।
ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ ११ ॥

तद्ब्रह्म परमं नित्यमजमक्षयमव्ययम् ।
एकस्वरूपं [illegible] सदा हेयाभावाच्च निर्मलम् ॥ १२ ॥

तदेव सर्वमेवैतद् व्यक्ताव्यक्त स्वरूपवत् ।
तथा पुरुषरूपेण कालरूपेण च स्थितम् ॥ १३ ॥

श्री भागवते द्वितीय-स्कन्धे पञ्चमेऽध्याये ब्रह्मणः पद्मयोनेरुक्तिरिदं प्रति—

तस्यापि द्रष्टुरीशस्य कूटस्थस्याखिलात्मनः ।
सृज्यं सृजामि सृष्टोऽहमीक्षयैवाभिचोदितः ॥ १७ ॥

उपसंहारेऽपि षष्ठेऽध्याये—

स एष आद्यः पुरुषः काले काले सृजत्यजः ।
आत्माऽऽत्मन्यात्मनात्मानं संयच्छति च पाति च ॥ ३८ ॥

विशुद्धं केवलं ज्ञानं प्रत्यक् सम्यगवस्थितम् ।
सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् ॥ ३९ ॥

ऋषे विदन्ति मुनयः प्रशान्तात्मेन्द्रियाशयाः ।
यदा तदेवासत्तर्कैस्तिरोधीयेत विप्लुतम् ॥ ४० ॥

तृतीयस्कन्धे पञ्चमेऽध्यायेऽपि मैत्रेयविदुरसंवादे—

भगवानेक आसीदमग्र आत्माऽऽत्मनां विभुः ।
आत्मेच्छानुगतावात्मा नानामत्युपलक्षणः ॥ २३ ॥

स वा एष तदा द्रष्टा नापश्यद्दृश्यमेकराट् ।
मेने सन्तमिवात्मानं सुप्तशक्तिरसुप्तदृक् ॥ २४ ॥

त्रिकालाबाध्यतया सदैव सद्रूपोऽपि द्रष्टृत्वाद् दृश्याभावे निर्विषय दर्शनासम्भवात् स्वरूपमप्यसदिव मन्यत इत्यर्थ । अतएव क्वचित् सदसत्पदेनाप्ययमात्मा व्यवहृत इति स्मर्तव्यम् । उपसंहारेऽपि—

यतो प्राप्य न्यवर्तन्त वाचश्च मनसा सह ।
अहं चान्य इमे देवास्तस्मै भगवते नमः ॥ ४० ॥

एवं पुराणान्तरेष्वपि सर्वत्र विनेयम्—

अत्र सर्वत्र 'नासदासीन्नो सदासीत्तदानीं नासीद्रजो न व्योमापरो यत्' ( ऋ० सं० ) । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्,' ( छान्दोग्य ) । 'यतो वा इमानि भूतानि जायन्ते—' ( तैत्तिरीये ) । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्याद्या मूलतत्त्वप्रतिपादिका श्रुतय एवानूदिता ।

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः । ( मनुस्मृति अ० १ )

इत्यादिना भगवता मनुनाप्येवमेव तत्त्वमिदं प्रतिपादितम् । आगमशास्त्राणि च परशिवनाम्ना मूलतत्त्वमेवंविधमेव विवृण्वते । दर्शनान्यपि वेदान्तदर्शनमपि ब्रह्मैवमेव जगन्मूलं दर्शयति । अन्यानि तु दर्शनानि स्थूलारुन्धतीन्यायेन, शाखाचन्द्रन्यायेन वा सूक्ष्मतत्त्वे क्रमेण बुद्धिं प्रवेशयितुं प्रवृत्तानीति दार्शनिके निबन्धे प्रतिपादयितुमिह नात्मप्रवृत्ततया विवक्ष्यम् ।

## मूलतत्त्वे-दार्शनिकी प्रक्रिया

एकम् एव, अद्वितीयम् इति पदत्रयेण श्रुत्या सजातीयविजातीय, स्वगतभेदत्रयोऽपि तत्र निरस्यते, यथा हि घटस्य घटान्तरेण या भेद सजातीयभेद , स नास्मिन् परतत्त्वे सम्भवति, मूलतत्त्वद्वय-कल्पनाया प्रमाणाभावात् कदापि प्रमाणेन द्वितीयस्य मूलतत्त्वस्याप्रसिद्धे । आरम्भवाद

परिगृह्णन्तो नैयायिका यद्यपि मूलतत्त्वमूर्तेषु परमाणुषु सजातीय-भेदम-भ्युपगच्छन्ति, परं न तच्छ्रुतिस्मृत्यादिषु क्वाप्यनुमोद्यते। युक्तयश्चापि तेषां वेदान्त-भाष्यादि-ष्वाभासयन्त इति न तत्प्रमाणकोटौ प्रवेशयितुम-र्हम्। न च परमाणवः सर्वस्यापि मूलतया तैरभ्युपगताः, आत्माकाशा-दीनां नित्यद्रव्याणां पृथक् स्वीकृतत्वादिति श्रुतिसमन्वयस्य गन्धोऽपि तत्र न सम्भवति। प्रत्यक्षं परिदृश्यमानो विज्ञानसिद्धश्च भूतानामन्योन्यविनिमय एवमूलकतां सर्वथा ख्यापयन्न तत्पक्षे उपपादयितुं शक्यते। स्फुटं हि वृष्टिजलेन तृणान्महावृक्षादीनामुत्पत्तिर्दृश्यते। तत्र वृष्टिजलस्य निमित्तमा-त्रत्वं प्रकल्प्यकुतश्चिदागतानां पार्थिवपरमाणूनां समवायित्वप्रकल्पनं विज्ञानविरुद्धकल्पनामात्रमिति क्रमेण सूक्ष्मतत्त्वं निरूपयितुमारम्भिका प्रक्रियैव सम्प्राप्ता तैरनुसृतेत्युक्तमनुपदमेव। एवं घटादिभ्यो पटस्य भेदो-विजातीयभेदः, सोऽपि मूलतत्त्वे निराक्रियते—उत्पत्तेः प्राक्तत्त्वान्तराणां केनापि प्रमाणेन साधयितुमशक्यत्वात्-इति प्रतियोग्यप्रसिद्धया मूले विजा-तीयभेदस्यासिद्धेः। प्रकृतेर्मूलतत्त्वतावादिभिः सांख्यैर्यद्यपि तद्विजातीय पुरुषोऽभ्युपगम्यत इति प्रकृतौ विजातीयभेदस्तन्मते सम्भवति, तथापि श्रुतिपुराणादिषु मूलतएव प्रकृतिपुरुषभेदो नाभ्युपगत एव, तेषामपि च युक्तयो वेदान्तभाष्यादिषु सपरिकरं खण्डिताः। न च मूलत एव भेदे बुद्धिपुरुषयोः सम्बन्धोऽनुभूयमानः शक्यसम्भव इति सोऽपि पक्षो न प्रमा-णम्। दर्शनानां क्रमे एकं मूलतत्त्वं बुद्धौ प्रवेशयितुं साप्येका शाखेति तदुपयोगोऽपि न्यायवदेव समर्थनीयः। अथ घटे 'मुखोदराधोभागादीनां परस्परं भेदः स्वगतभेदः, सोऽपि मूलतत्त्वे नास्ति, तस्य सावयवत्वासम्भवात्, सावयवस्य नित्यत्वाप्रसिद्धेः, अनित्यत्वे च मूलान्तरकल्पनायामनवस्था

प्रसगात्। यद्यपि सांख्यैर्गुणत्रितयात्मिकाया प्रकृतेर्मूलत्वकल्पनात्सत्वादीना परस्परं भेदे मूले स्वगतभेद सभवति, पर न सोऽपि तेषा पक्ष परिग्राह्य। वस्तुत्रयसमुदायस्य नित्यतायां साधयितुमशक्यत्वात्। स्वयमपि च तैरव्यक्तस्य सावयवत्व नाभ्युपगम्यते इति विचित्रैव सा प्रक्रिया। वस्तुतस्तु तदभ्युपगता प्रकृतिर्न द्रव्यरूपा अपितु शक्तिरूपेत्यग्रे स्पष्टीकरिष्याम, शक्तिश्च न सावयवा भवतीति न तत्रापि स्वगतभेदकल्पनावकाश। सोऽयं, भेद-त्रय-निरास पुराणेष्वपि "एकं वै ज्योति" "निरञ्जनम्" "निर्मलम्" "नित्यनिर्मलम्" "स्वच्छम्" "अविनाशि" "व्यापकम्" "विशेषणविवर्जित" "गुणै सर्वैर्विवर्जित" "विशुद्धम्" "केवल" "निर्गुणम्" इत्यादिभि पदै पुन पुनरभ्यस्तैरुक्तेषु पद्येषु स्फुटीकृत एव।

## शाङ्कर-वेदान्त-प्रक्रिया

निर्गुण निर्धर्मक तत्त्व शब्देन केनापि न प्रतिपादयितुमर्हम्, शब्दाना गुणधर्मपुरस्कारेणैव प्रवृत्तत्वात्, न च मनसापि चिन्तनीयम्, मनसोऽपि धर्मविशेष-पुरस्कारेण इतरभेदपुरस्कारेण च चिन्तनस्वाभाव्यादिति वाङ्मनसातीत तदुच्यते। श्रुतिभिस्तटस्थलक्षणमार्गेण तत्कथमप्युपलक्ष्यते, तत्तद्धर्मनिषेधपूर्वक वा निषेधाधिकरणरूपेण शेषतया बुद्धावारोप्यते। यत्रापि "सत्य ज्ञानमनन्त ब्रह्म" त्यादौ भाववोधकै शब्दै प्रतिपादन श्रूयते, तत्रापि वाङ्मनसातीतत्त्वबोधकश्रुत्यैकवाक्यतया निषेधमुखेन प्रतिपादन एव तात्पर्यमवसेयम्। सत्पद सत्यपद वा न तत्र सत्ताधर्मित्वमाह अपितु असत्त्वावस्तुत्वाद्यभावम्, त्रिकालबाध्यत्वाभाव च। अतएव नासदीय सूक्ते "नासदासीन्नोसदासीत्तदानीम्" इति सृष्टे पूर्व सदपि प्रतिषिद्धम्।

सत्ताश्रयत्वेन सम्भाव्यमानस्य सतः प्रतिषेध, असद्वस्तु विलक्षणस्य सतस्तु आसीत् पदेन पूर्वभावोपनिबन्धनमित्युभयमप्युपपद्यते। भगवद्गीतास्वपि च 'न सत्तन्नासदुच्यते' इति यदुक्तं तदप्येवमेव सगमनीयम्। सत्ताश्रयत्वाभावेन न सत, अवस्तु वैलक्षण्येन च नासदिति। ज्ञानपदमपि अचेतनत्वाज्ञानित्वाद्यपरपर्यायस्य जडत्वस्याभावमाह, अनन्तपदन्तु तत्र्यटितत्वेन स्पष्टमेव परिच्छिन्नत्वाभावबोधकम्। एवम् 'आनन्दो ब्रह्मेति व्यजानात्' 'आनन्द ब्रह्मे'त्याद्यपि भयकम्पादिरूपदुःखाभाव श्रावयति, न तु सुखधर्मिताम्। तथैव 'रसो वै स' इत्यादौ रसपदमपि भयकम्पदुःखाभावापरपर्यायशान्त्यानन्दबोधकम्। ब्रह्मपदमपि बृहणार्थकं जगदुत्पादकत्व तटस्थलक्षणमेव बोधयति, न तु स्वरूपलक्षणम्। इद च जगदुत्पत्यनन्तर ज्ञातु शक्यते—इति मूल तत्त्व न केनापि शब्देनाभिधीयते। अतएव "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्याद्या श्रुति सगच्छते। श्री भागवते च दशमस्कन्धे वेदस्तुति प्रकरणे "अनिर्देश्ये ब्रह्मणि श्रुतय कथ चरन्ति' अर्थात् यदा ब्रह्म वागगोचर तदा श्रुतिभि कथ प्रतिपाद्यत इति परीक्षित प्रश्न वेदानां मुखेनैव समादधता श्री शुकाचार्येण वेदकृता स्तुति "त्वयि हि फलन्त्यतन्निरसनेन भवन्निधना" इत्युपगद्दृता। अथ "भवन्निधना त्वयि हि फलन्ति" इत्यादिना अवसाने ब्रह्मण्येव श्रुतीना तात्पर्यमिति स्पष्टीकृतम्, पर तत्र प्रतिपादनप्रकार 'अतन्निरसनेन' इति तृतीया विभक्त्या, 'अतन्निरसनम्', अर्थात् बुद्ध्युपारूढतत्तद्धर्माभावबोधनमेवेति स्पष्टमुक्तम्। शिवमहिम्नस्तोत्रे—श्री पुष्पदन्ताचार्येणापि—

"अतद्व्यावृत्त्या चकितमभिधत्तेश्रुतिरपि"

इत्यभिधानप्रकार, अतद्व्यावृत्तिरूप एव स्वीकृत। तस्मादाटस्य-

लक्षणेन अभावमुखेन वा श्रुतिपुराणादिषु निर्गुणनिर्धर्मकमूलतत्त्वप्रतिपादनमिति जगद्गुरु श्री शंकराचार्यचरणसिद्धान्तमनुसरता नव्याः।

## अन्येषामपि समन्वयः

उपासनामार्गमेव प्रधानतयाऽभ्युपयन्त श्रीमद्भगवद्रामानुजाचार्यचरणास्तु सर्वजगन्मूलकारण भगवन्त परमात्मान प्राकृतगुणदोषलेशादून्य मप्यलौकिकाप्राकृतानन्तकल्याणगुणनिधि मन्यन्ते। श्री भगवद्वल्लभाचार्यचरणाश्च निर्गुणसगुणत्वे कार्पाससूत्रन्यायेन समावेशयन्ति। यथा हि-कार्पासं पूर्वं न सूत्राधारम्, किन्तु तदेव सूत्राणि सृजति, अनन्तर च वेष्टनेन स्वयमपि सूत्रवत् सम्पद्यति, तथा—पर ब्रह्मापि मूले न गुणवत्, किन्तु सर्वेषा गुणानामुत्पादक, उत्पादनानन्तर च तान् गुणान् गृह्णत् सगुण भवत्येवेति। चिदानन्दायपि तदिच्छया तत एव मूलादाविर्भवन् सोऽपि तदेव चिदानन्दरूपेण परिणमतीति यावत्। आगमशास्त्रेण च निर्गुणेऽपि परमशिवे स्वातन्त्र्य नाम धर्मोऽभ्युपगम्यते, तेन स्वेच्छया स सर्वं कर्तुं सर्वरूपेण वा भवितु शक्नोतीति। सूक्ष्मरूपेण क्रियमाणे विमर्शे नैतेषु सिद्धान्तेषु कश्चन विरोध, कैवलप्रतिपादनप्रक्रियाभेदमात्रम्, वय हि जीवा प्राकृतैरेव गुणै परिचिता, तानेव तत्तच्छब्दबोध्यान् जानीमहे, मत्वप्राकृतानलौकिकान् गुणान् परिचिनुम, तदा कथ तत्तच्छब्दवाच्यता तेषां गृह्णीमहि, तथा चालौकिकाप्राकृतानन्तगुणगणनिधिरपि स भगवानस्मद्दृष्ट्या निर्गुण एव, अस्मत्परिचितानां प्राकृताना गुणानामभावात्, सृष्टौ सर्वगुणोत्पादकस्तु सर्वैरपि स्वीकृत एवेति वस्तुनि न किमपि वैलक्षण्यम्, प्रतिपादन-प्रक्रियाभेदमात्रम्। इम च शब्दभेदमेव स्वयीकृत्य स्वस्वपक्षसाधने बहुपराक्रम्यन्ति सूरय इति न तस्मिन् विवादक्षेत्रे पदमवतराम। भवतु नाम,

पुराणानि तु श्रुत्यनुगामीनि निर्गुणं निर्धर्मकमखण्डं मूलतत्त्वमेव प्रतिपादयन्तीति निर्दर्शितं प्राक्।

## शक्तिनिरूपणम्

एवं विधात् सततमेवरूपादविक्रियात् कथं सृष्टिः सम्भवतीत्याशङ्क्य अस्ति तत्रालौकिकी शक्तिरिति पुराणानि समादधति। तथाहि वैष्णवे पुराणे—

मैत्रेयः—निर्गुणस्याप्रमेयस्य शुद्धस्याप्यमलात्मनः।

कथं सर्गादिकर्तृत्वं ब्रह्मणोऽभ्युपगम्यते ॥ इति प्रश्नः।

उत्तरयति पराशरः—

शक्तयः सर्वभावानामचिन्त्या ज्ञानगोचराः।

यतोऽतो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥

भवन्ति तपतां श्रेष्ठ पावकस्य यथोष्णता ॥ २ ॥

( प्र० अंश०, अध्यायः ३ )

सर्वेष्वेव पदार्थेषु यत्किञ्चित्कार्यजनन-शक्तिरुपलभ्यते, यथाग्ना वुष्णताशक्तिरस्ति, यया दाहादौ कारणत्वमग्नेर्विज्ञायते। एताश्च शक्तयस्तत्र तत्र कार्यदर्शनेनैवानुमीयन्ते, न तु कार्योत्पत्तेः प्राग्विज्ञायन्ते, तस्मादचिन्त्या इमाः अनिर्वाच्या दृशा कलयितुमशक्याः। एकैकस्मिन् तृणविशेषेऽपि कियदस्ति रज्जुनिर्माणरोगापहरणदुग्धोत्पादनादिविविधसामर्थ्यमिति कस्तादृक् तृणदर्शनमात्रेण परिचेतु शक्नुयादर्वाग्दृक् पुरुषः, कार्यदर्शनेनैव ता अनुमीयन्ते। एते च शक्तिविशेषास्तृणेऽनुमीयमाना अपि तृणाद्भिन्नाः, उतभिन्ना, अग्नेरुष्णता अग्नेरभिन्ना उतभिन्नेत्यपि निर्धारयितु न शक्यते इत्यचिन्त्या शक्तयः। तथैव ब्रह्मण्यपि जगदुत्पादनपरिरक्षणसंहरणादिशक्तयः सन्ति, याभिस्तानि तानि कार्याणि

क्रियन्ते-इत्युत्तरस्याभिप्रायः । कार्यभेदाच्छक्तिभेदमुपगम्य शक्तय इति बहुवचनमत्रोपात्तम् । एकैवशक्तिर्विभिन्नानि कार्याणि सपादयतीति लाघवेनैकत्वमपि शक्तेरत्यत्रान्यत्र व्यवह्रियते । एवमेव पाद्मे सृष्टिखण्डे तृतीयाध्यायस्यारम्भे भीष्मपुलस्त्ययो प्रश्नोत्तरे, तत्रापि प्रायेण तान्येवाक्षराणि । अन्ते तु तत्र 'उत्पन्न. प्रोच्यते ब्रह्मन्नित्य एवोपचारत ' इति भगवता पुलस्त्येन विशेष उक्त । श्री भागवते च विषयोऽयं विस्तृत्यप्रतिपादित , तत्र हि तृतीयस्कन्धे पञ्चमेऽध्याये—

सा वा एतस्य संद्रष्टु शक्तिः सदसदात्मिका ।
माया नाम महाभाग ययेदं निर्ममे विभुः ॥ २५ ॥

इति पूर्वं मैत्रेयोक्त श्रुत्वापि विदुर पृच्छति—

ब्रह्मन् ! कथं भगवतश्चिन्मात्रस्याविकारिणः ।
लीलया चापि युज्येरन् निर्गुणस्य गुणाःक्रियाः ॥ ( अ० ७-१ )

लीलामात्रेणापि कुतो न युज्येरन् इत्युपपादयति विदुर —

क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषान्यतः ।
स्वतस्तृप्तस्य च कथं निवृत्तस्य सदान्यतः ॥ २ ॥

अय भाव—किमर्थं भगवान् सृष्टि करोतीति प्रयोजनानुयोगे बालो यथा निष्प्रयोजनमेव क्रीडादिकं करोति तथा प्रयोजनमन्तरेणापि भगवतः सृष्टिः । कश्चिद्राजा धनिको वा यथा तिष्ठन् विनोदाय स्वकरस्थं पुष्पं भ्रामयति, न तत्र प्रयोजनापेक्षा, तथैव भगवतोऽपि विनोदमात्रमेतद् सृष्ट्यादिकम् । अस्माभिरिदं दुष्करं प्रतीयते, अनन्तशक्तेर्भगवतस्तु विना श्रमेणैव विनोदोऽयं संभवतीत्यादि यदुच्यते, तदपि न युक्ति-

मद्वच । बालस्य विशेषोऽस्ति चाञ्चल्यम्, तत एव तस्य मनोविनो यितुमिच्छा भवति, विभिन्नान् बाह्यान् पदार्थान् सोऽभिवाञ्छति, अत एव बाह्येभ्य पदार्थेभ्य इच्छामुपशमयितु तस्येहा भवति । राजा धनिक वापि स्वपरतिभ्या मानस आक्रान्त एवैतयरतिमपाकर्तुं विनोद करोति भगवास्तु नित्यतृप्त , न च तस्मान् किमप्यस्ति बाह्य येन स विनोद मिच्छेत्, आत्मारामोऽपि कथ बाह्य स्रष्टुमिच्छेदिति शङ्का नोपनदृष्टान्तेन निवर्तत इति । जीवाना सुकृतदुष्कृतफलानि दातु प्रभुरेव स जगत्सृजतीति दर्शनान्तररीत्यापि नोपपद्यते प्रयोजनम् । प्रभुर्हि स्वशासन व्यवस्थापयितु कर्मफलानि ददाति, न त्वाप्तकामस्य शासनव्यवस्था वामोऽप्युपपद्यते । जीवाना बन्धनस्यैव प्रागभावेन कारुण्यात्तन्मोचनेच्छापि न सभवति । यदप्युच्यते अस्ति तस्य मायाख्या शक्ति , तया स सृजतीति, तदपि निराकरोति विदुर —

> अथाभीऽभगवान् विश्व गुणमय्यात्ममायया ।
> तया सस्थापयत्येतद्भूय प्रत्यपिधास्यति ।। ३ ।।
> देशत कालतो योऽसाववस्थात स्वतोऽन्यवद् ।
> अविप्लुतावबोधात्मा स युज्येताजया कथम् ।। ४ ।।

अर्थात्—मायाख्यशक्त्या सम्बन्ध एव तावद भगवतो नोपपद्यते, भगवतो देशकालावस्थाभिरपरिच्छिन्नतया कोऽसौ भगवत्सत्ता विरहितो देशो यत्र सा शक्तिर्मायाख्या तिष्ठेत ? सृष्टिश्च कदाचिद् भवति, कदाचित्प्रलयो भवति, पुन सृष्टेरुद्घाटनम्, तदेव कालकृतो विपर्ययो मायाया दृश्यते, तस्मात् कदाचित्सा सिसृक्षा शक्तिर्भगवति तिष्ठति, कदाचित्तदन्या जिहीर्षाशक्तिरिति भगवतोऽप्यवस्थाभेद स्यात् । ततश्चावस्थाभिरपरि-

न्छिन्नत्व छिन्नम् । मायाविशिष्टस्य च प्राप्त कालसम्बन्धोऽपीति कथम-परिच्छिन्नता स्यात् ? ननु मायया भिन्नत्वे सर्वमिद शङ्क्येत, अभिन्नैव तु भगवता मायेति चेदुच्येत, तदपि न सम्भवति, भगवान् सदा निरवच्छिन्न-ज्ञानरूप उपपाद्यते, माया तु ज्ञानविरोधिनीति कथ तादात्म्य सभवेत् ? तस्मात् कोऽपि सम्बन्ध आधाराधेयभावो वा तादात्म्य वा नोपपद्यत इति सम्बन्धस्यैवाभावे कथ सा भगवत शक्ति ?

किञ्च जीवरूपेण भगवानेव सर्वशरीरेष्वनुप्रविष्ट, ततश्चैक एव क्वचिद् दु खमनुभवति, क्वचित्सुखम्, क्वचिदीश्वरभावम् क्वचिच्च दीनतामिति विरुद्धा धर्मा एकत्र कथमुपपद्येरन्नित्याह—

भगवानेक एवैष सर्वक्षेत्रेष्ववस्थित ।
अमुष्य दुर्भगत्व वा क्लेशो वा कर्मभि कुत ॥ इति ॥५॥

उत्तरयति भगवान् मैत्रेय —

सेय भगवतो माया यन्न येन विरुध्यते ।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥ ८ ॥
यदर्थेन विनामुष्य पुंस आत्मविपर्यय ।
प्रतीयत उपद्रष्टु स्वशिरश्छेदनादिक ॥ ९ ॥
यथा जले चन्द्रमस कम्पादिस्तत्कृतो गुण ।
दृश्यतेऽसन्नपि द्रष्टुरात्मनोऽनात्मनो गुण ॥१०॥
स वै निवृत्तिधर्मेण वासुदेवानुकम्पया ।
भगवद्भक्तियोगेन तिरोधत्ते शनैरिह ॥११॥ इत्यादि

अयमभिप्राय —उपपत्त्या यद्यपि शक्या मायया सम्बन्धो, निर्गुणाद्ब्रह्मणः स्वर्गोत्पत्ति, एवसर्वत विभिन्नेषु क्षेत्रेषु सुखदु खयोरिव धर्मादिवद विरुद्ध-

मिवाभाति, नयेन तर्केण नोपपद्यते, तथापि तदेतत्सर्वं भवत्येवेति किमत्र वदाम । अतएव सा शक्तिर्माया-पदेनाभिधीयते । 'अघटितघटनापटीयसी' हि माया भवति, उपपत्तिविरुद्धमपि सा दर्शयति । अनुभूयते च प्रत्यहमघटितघटना जीवै । स्वप्ने हि खड्गादिविरहेऽपि, छेत्तुरभावेऽपि स्वशिरश्छेदादिक जन पश्यति । तत्र केन शिरश्छिन्नम् केन वा दृष्टम्, शिरसैव सह चक्षुषो निर्गमनेन दर्शनसाधनाभावादिति सर्वं नोपपद्यत, तथापि दृश्यत एव । मूलभूतात्मन्यसदपि च दु खादिकमनुभूयत एव । यथा जलप्रतिबिम्बितस्य चन्द्रस्य जलकम्पे कम्प प्रतीयते, तथाऽन्त करण-प्रतिबिम्बित आत्मन्यन्त करण धर्मप्रतीति । कथ नीरूपस्यात्मन प्रतिबिम्ब इत्यादि तु उपपादयितुमशक्यमपि माया बलादेव स्वीकर्तव्यमापतति ।

लोकेप्यैन्द्रजालिका कथ क्षणेन विशाल प्रासाद निर्मिमते विना साम ग्रीम्, कथ वा कंश्चित क्षणैरेव वृक्षादिकमुत्पाद्य तत्फलान्यपि पक्वानि जनै खादयन्ति, कथ वा निरवलम्ब आकाशे विहरन्ति, सर्पशिरस्यपि सुन्दरीं स्त्रियमुत्पादयन्तीत्यादि न शक्यत उपपादयितुम्, तदा किमु वक्तव्यमचिन्त्यविभवस्य लीलयैव जगत्सृजतो भगवतो माया विषये । सव प्रलयादिक कुत स करोतीति प्रयोजनानुयोगोपि न तत्र युक्त ।

'विधेयैः क्रीडन्त्यो न खलु परतन्त्रा प्रभुधिय.'

इति न्यायेन स्वतन्त्रेच्छतयैव तस्य समाधेयत्वात् अतएव ब्रह्मसूत्रकृतापि—

'लोकवत्तु लीलाकैवल्यम्'

इत्येव समाहितम् । आप्तकामस्यापि स्वातन्त्र्येणैव विनोदेच्छा सभवतीति न तस्य प्रयोजनविषयेऽतितुच्छा अज्ञा वय किमपि विवेक्तु प्रभवामो जीवा । यथाह्यस्मच्छरीररुधिरमासाद्यवयवभूता वैज्ञानिकै स्फुट साध्यमाना कृमि-कीटाणुप्रभृतयोऽस्मत्कार्याकार्य-प्रयोजन विवेचयितु न समर्था तथैव वय-

मपि तुच्छा ईश्वरब्रह्माण्डस्य कृमिकीटाणुभूता नेश्वरप्रयोजनं चिन्तयितुं प्रभवाम.। अतएव 'नैषातर्केणमतिरापनेया' इत्यादिभि श्रुतिभि —

अचिन्त्या खलु ये भावा न तांस्तर्केण योजयेत्।
प्रकृतिभ्य पर यत्तु तदचिन्त्यस्य लक्षणम्॥

इत्यादिभिर्भूयोभूय समुद्घुष्टै पुराणवचनैश्च तद्विषये तर्कप्रयोगः सर्वथा निवारित । न तत्रास्मदबुद्धिव्यापार समवतीर्णशक्यत्वादेव निवारणम्, न तु स्वाभिमतमस्मदादिबुद्धौ हठादारोपयितुम्। ननु भो. अविचाररम्यमेव पथं कथ गृह्णीमहि ? न चेदुपपद्यते स्वगतामय पक्ष, 'न कदाचिदनीदृश जगत्' इति 'स्वभावादेव सर्वं जायते' इत्यनीश्वरवाद-पक्षस्तार्किकाभिमत परमाणुवाद प्रकृतिवादो वा परिगृह्यतामिति चेद्न भवेदेतदेवम्—यदि ते पक्षा सम्यगुपपद्येरन्। तेष्वपि तु पर्यालोच्यमाने-ष्वनुपपत्ति पुरस्तात्स्फुरति, किमत्रक्रियताम्। सावयवस्य नित्य दृष्टपरि-वर्तनस्य प्रत्यक्ष नवनवोत्पद्यमानपदार्थघटितस्य विनश्यत्तत्तदर्थस्य च जगत एकरूपत्व कथ बुद्धावुपारोहेत् ? स्वभावश्चकथ निश्चीयताम्, कुतश्च कार्यकारणभावापरिज्ञाने कार्यार्थिन कारणसमग्रीं समर्दयितुं प्रवृत्ति. सर्वत्र परिदृश्यमानोपपाद्यताम् ? गृहकारणव्यापारमन्तरेण गृहोत्पत्तिं क्वाप्यदृष्टवद्भि पृथिव्यादिसावयवपदार्थोत्पत्ति कर्तारमन्तरेणैव कथ बुद्धावारो-प्यताम् ? किमन्यत्-निरीश्वरवादिभिरपि—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते।
ततो निरभिलप्यास्ते नि स्वभावाश्च दर्शिता॥
इदं वस्तुबलायातं यद् वदन्ति विपश्चित।
यथा यथार्थाश्चिन्त्यन्ते विशीर्यन्ते तथा तथा॥ (बौद्धदर्शने)

इति जगतः पदार्थानामनिर्वचनीयत्वं शरणीकृता। सर्वे च नास्तिक-वादा. परमाणु-प्रवृत्त्यादिवादाश्च ब्रह्मसूत्रभाष्येषु परीक्षिता अनुपपन्नता-मेवापादिताश्चेति नात्र तद्विस्तरावसरः। आधुनिका वैज्ञानिका अपि, 'अस्मादेतदेवं जायते' इति कार्यकारणभावमात्रबोधने पाटवं प्रदर्शयन्त उपपत्तावुदासत एव, का कथा तु मूलतत्त्व विनिश्चयस्य। तस्मान्न मूल-तत्त्वान्वेषणे तर्काभिनिवेश. संभवतीत्यभ्युपगम्यापौरुषेयैराध्यात्मिकीं दिव्यामृतम्भरां प्रज्ञामासाद्य महर्षिसमुपादिष्टैर्वा वेदैर्यद्बोध्यते तदेव शर-णीकरणीयम्, नान्यः पन्थाः। अतएव—

को अद्धावेद क इह प्रवोचत्।
कुत आजाता कुत इयं विसृष्टिः॥
अर्वाग्देवा अस्य विसर्जनेनाथाः,
को वेद यत आबभूव।
इयं विसृष्टिर्यत आबभूव,
यदि वा दधे यदि वा न।
यो अस्याध्यक्षः परमे व्योमन्,
सो अङ्ग वेद यदि वा न वेद॥
( ऋ० सं० १०।१२९।६,७ )

इत्याद्या मन्त्रा "यदि मन्यसे सुवेदेति दभ्रमेवत्वं वेत्थ ब्रह्मणोरूपम्, अविज्ञातं विजानताम्, विज्ञातमविजानताम्", इत्याद्या उपनिषदश्च दुरवगाहतामस्य विषयस्य बोधयन्तः, अज्ञेयत्वमेव वा जगन्मूलस्य ब्रह्मण. मायास्वरूपस्य च बोधयन्त. सर्वथैव निरवलम्ब बुद्धिव्यापारं निष्प्रयोजनं तत्र मन्यन्ते। तामेव दुरवगाहतामनुवदति पुराणमपि—

अतो भगवतो माया मायिनामपि मोहिनी ।
तत्स्वयं चात्मवर्त्मात्मा न वेद किमुतापरे ॥

( श्रीभा० स्क० २, अ० ६-३६ )

'औपनिषदं पुरुषं पृच्छामि,' 'प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ' इत्याद्याः श्रुतयः—

पुराणं मानवो धर्मः साङ्गो वेदश्चिकित्सितम् ।
आज्ञासिद्धानि चत्वारि न हन्तव्यानि हेतुभिः ॥

इत्याद्याः स्मृतयश्च शास्त्रगुरूपदेशमेव तत्त्वज्ञाने शरणं वदन्ति । श्री पुष्पदन्ताचार्यश्चापि स्वीये शिवमहिम्नस्तोत्रे—

किमीहः किं कायः स खलु किमुपायस्त्रिभुवनम् ।
किमाधारो धाता सृजति किमुपादान इति च ।
अतर्क्यैश्वर्ये त्वय्यनवसर-दुःस्थो हतधियः ।
कुतर्कोऽयं कांश्चिन्मुखरयति मोहाय जगतः ॥
अजन्मानो लोकाः किमवयववन्तोऽपि जगता ।
मधिष्ठातारं किं भवविधिरनादृत्य भवति ॥
अनीशो वा कुर्याद् भुवनजनने कः परिकरो ,
यतो मन्दास्त्वां प्रत्यमरवर संशेरत इमे ॥

इति मूलतत्त्व विषये तर्कस्यानवसरदुःस्थता वदन्, निरीश्वरवाद-मपि तर्केणोन्मथ्नाति । अहो ! कोऽपि वादस्तत्र नोपपद्यते चेद् , अज्ञेय-वादमेव शरणीकृत्य सुखं सुप्यताम् किमनेन दन्तघर्षणेनेति यदि कश्चि-द्वदेत् , तत्र दोषं व्यनक्ति भगवान् मंत्रेय पूर्वोपदर्शितेनैकादशेन श्लोकेन-यद्येवमौदासीन्यमवलम्ब्येत तर्हि त्रिविधदुःखानुभवनिवृत्तिर्न स्यात् , सतत

च प्रातिकूल्यपराहतैर्विबलैरेव याप्येत जीवनम् , नहि माया बन्धनच्छेद-मन्तरेण दुःखनिवृत्ति सम्भवति , तस्मात्तच्छास्त्र सद्गुरूपदेशमनुसृत्य भगवति विश्वस्य सद्भक्त्या माया बन्धननिवृत्ति सम्पादेत ।

किञ्च—कथमिद जगज्जातम्, किमस्य मूलम् इति चेतनस्य स्वभावादेवोत्तिष्ठते जिज्ञासा । सा यदि शान्ति न नीयते, व्यथामेव चेतस्युत्पादयतीति तदपनयनाय यत्न आस्थेय एव । अयमेव हि पाश्चात्यदर्शनविभागमज्ञेयवादस्यास्माकमनिर्वचनीयवादस्य च महान् विशेषो यत्ते आरम्भादेव सर्वमविज्ञेय मत्वा विचारादेवोदासते । वयन्तु यावती मनसो गति स्तावद् विचार्य यत्र सर्वथा मनोगतिनिरोधस्तदनिर्वचनीय मत्वा तत्र शास्त्र शरणीकुर्म । तेन जिज्ञासाजनित दु खमस्मन्मार्गे न स्थिरीभवति । तेषा तु स्वाभाविकी जिज्ञासा कदाचिदुदिता चेतो विप्लावयत्येवेति । तथा च भगवच्छक्त्या मायया सर्व जगदुत्पाद्यते , न वस्तुत उत्पाद्यते अपि तु अनुपपन्नमसदेव स्वप्नादिवज्जीवान् प्रति प्रदर्श्यत इति श्री भागवतश्लोकैर्मैत्रेयोक्तै स्फुटीभूतम् । एतदेव च—'उत्पन्न प्रोच्यते ब्रह्मन् नित्य एवोपचारत ' इति पूर्वोक्तेन पद्मपुराणवचनेनापि सक्षेपेण व्यज्यते । श्री भागवते द्वितीयस्कन्धेऽपि स्पष्ट श्री शुकोक्ति ,

आत्ममायामृते राजन् परस्यानुभवात्मन ।
न घटेतार्थसम्बन्ध स्वप्नद्रष्टुरिवाञ्जसा ॥

( अ० ९-१ ) इति ।

सेय माया शक्तिर्भेदाभेदाभ्या सदसत्त्वरूपेण वा न निर्वक्तु शक्यते । न ह्यय मूलतत्त्वाद् ब्रह्मणो भिन्ना, पार्थक्येन कदापि कुत्राप्युपलब्धेरभावात् । नापि सर्वथा अभिन्ना, ब्रह्मणि जगत्कर्तृत्व नोपपद्यत इति

प्रश्नस्य समाधानायेयं-कल्प्यते। सा यदि सर्वात्मना तेनाभिन्नैव स्यात्, तर्हि अनुपपत्तिप्रश्नः पुनरप्यसमाहित एव तिष्ठेत्, ब्रह्मणि प्रश्नस्यो-त्थितत्वात्, तदतिरिक्तस्य चास्वीकरणात्। नापि भिन्नाभिन्ना, भेदा-भावोह्यभेद उच्यते–यद्यस्ति भेदः, तर्हि कथमभेदो व्यवह्रियताम्, यदि च अभेदो नाम भेदाभावोऽस्ति, तर्हि भेद कथं प्रतीतिपथमारोहेत्, तस्माद् भिन्नाभिन्नेति शब्दकल्पनैव नोपपद्यते। ततश्च भेदेन अभेदेन वा न निर्वक्तुं शक्येत्यनिर्वचनीयवाद एव गतिः। जडा, चेतना वेति, जाड्य-चैतन्याभ्यामपि न निर्वक्तुं शक्यते। चित्तो ह्यात्मभूतेति कथं जडा कथ्य-ताम्, परिणामस्तस्या जगद्रूपो जड एव दृश्यते, न चेतनस्य परिण-तिरिति कथं सर्वात्मना चेतनापि स्यात्। ततश्चानिर्वाच्यैव। एवमेव सतीयमित्यपि न वक्तु शक्यते, श्रुति विरोधापत्तेः, श्रुतिर्हि 'सदेवसो-म्येदमग्र आसीद् एकमेवाद्वितीयम्', इति मूलतत्त्वस्य सजातीयविजातीय भेदस्य, ब्रह्मात्मन्येव सत्वे स्वगतभेदस्य च प्रसक्तया श्रुतिविरोध स्फुट एव। न च पार्थक्येन सोपलभ्यते, सत्वे तु पार्थक्येनोपलब्धिर्दुष्परिहरा प्रसज्येतैव। न वा असती, सृष्ट्युत्पत्तिप्रश्नस्यासमाधेयत्वप्रसङ्गात्। न वा सदसती, सत्वस्य सत्वाभाव रूपस्यासत्वस्य चात्यन्त विरुद्धत्वे-नैकत्र कथनस्यासामञ्जस्यत्वात्। तस्मात् सत्वासत्वाभ्यामनिर्वाच्यैवेयं स्वीकर्त्तव्या भवति। पुराणेषु तत्र तत्र सदसदात्मिकेति यदुक्तं तस्या-प्यनिर्वचनीयतायामेव तात्पर्यम्। सत्वासत्वयोरेकत्रासमवादिति। यदुक्तं देवी भागवते—

न सती सा नासती सा नोभयात्मा विरोधतः।
अतोविलक्षणा काचिद् वस्तुभूतास्ति सर्वदा॥
(स्क० ७, अ० ३१, श्लोक० ७)

श्रुतिविरोधतो न सती, सृष्ट्युपपत्तिविरोधतो नासती, उक्तिविरोधतश्च नोभयात्मा, अतस्त्रितयविलक्षणा, किन्तु सृष्ट्युपपत्तये स्वीकार्यैव। न चाभावरूपैव, स्वरूपेणैवासतोऽभावस्य जगदुत्पादकत्वासम्भवादिति वस्तुभूता सर्वदा चास्ति नित्यैवत्यर्थः। शक्तिविरहितस्य परतत्त्वस्य कदापि कुत्रापि चासम्भवादिति पदार्थः। अनिर्वचनीयेन च स्वीकृतेनापि न मूलतत्त्वस्यैकता विरुद्ध्यते। सत एव द्वितीयस्य तत्त्वस्य श्रुताबभावबोधनात्, अनिर्वचनीयस्य निस्तत्त्वस्य तत्त्वरूपतया अस्वीकृतत्वाच्च।

## शक्तौ श्रुतिः प्रमाणम्

इय चैवविधा शक्ति श्रुत्यापि श्राव्यते। तथा हि सृष्टिप्रतिपादके नासदीयसूक्ते—

नासदासीन्नोसदासीत्तदानीम् नासीद्रजो न व्योमापरो यत्।
किमावरीव कुह कस्य शर्मन्नम्भः किमासीद्गहनं गभीरम्॥ १॥
न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत् प्रकेतः।
आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास॥ २॥
(ऋ० स० १०।१२९)

इह सृष्टेः पूर्वं सम्भाविता कैश्चिद्दार्शनिकैरभ्युपगम्यमानाश्च सद् (सत्तात्मक तत्त्वम्) असद् (अभाव) रज (परमाणव) व्योम (आकाशम्) अपर (परत्वापरत्वव्यवहार-हेतुभूता दिक्) आवरणम् (साङ्ख्याभ्युपगता सर्वकार्याच्छादिका प्रकृति) अम्भ (पृथिव्यवसानेऽन्त जलम्), मृत्यु, (सर्वसंहारकत्वेनान्ते परिशिष्टतया सम्भाव्यमान) अमृतम्, (मरणादिरहित किमपि सम्भाव्यमानम्) रात्र्यह्नी (एतदुपलक्षित काल) इति सर्वे पदार्था प्रतिषिद्धा। श्री गुरुचरणानां दशवा-

दशरहस्योक्तदिशा तु पूर्वं साध्ययुगे प्रचलिता सदसद्वाद, रजोवाद, व्योमवाद, वारवादिवाद, (अपरवाद.) आवरणवाद अम्भोवाद अमृतमृत्युवाद, अहोरात्रवाद, इत्यष्टौवादा पार्थक्येन प्रत्याख्याता। सन्देहवादो दैववादश्चेति द्वावग्रे ६,७ मन्त्रयो प्रत्याख्येयौ इति दशवादा प्रतिक्षिप्ता। द्वितीये तु मन्त्रे 'आनीदवातमिति' सिद्धान्त उक्त। एकमेव सृष्टे पर सत्त्वम् मूलतत्त्वमित्यर्थं। नान्यत्तस्मादस्ति, तदेव 'आनीत' प्राणिति स्म, जगद्रूपेण विकसति स्मेति यावत्। स्वय स्वरूपादप्रच्यवतोऽपन्नाभाजगद्रूपताप्रदर्शनम्, सोऽयविवास एव शक्यते वक्तुम्, न तु परिणाम, परिणामे स्वस्वरूपविकारप्रसक्ते। यद्यपि विकासेप्यस्ति रूपान्तरप्राप्ति, मुकुलितस्य विकसितस्य च कुसुमस्यैक-रूपताया अदर्शनात्, तथापि स्वरूपाप्रच्युते कथचिद्विकास शब्द शक्यते प्रयोक्तुम्। वस्तुतस्तु न कोऽपि शब्दप्रयोगस्तत्र सभवतीति वाङ्मनसा-तीतत्व प्रागेवावोचाम, पर शब्दप्रयोगमन्तरेण बोधयितुमशक्यत्वात् कथचित्तामवस्थामुपलक्षयितु समर्थ कश्चिच्छब्द परिग्राह्य एव, तत एवागमशास्त्रे विकासशब्द परिगृहीत, श्रुतिस्सूक्ता तत्र आनीदिती प्राणनशब्दमाह। अन्तर्गतस्य बहिर्नि सारण हि प्राणनम्, एवस्यापि तस्यान्तरे सर्व वर्तत एवास्फुटमिति स्वातन्त्र्ये स जगदेव बहिर्नि सारयति इति सर्वा श्रुतय स्मृतयश्च व्याचक्षते, सत्कार्यवादसिद्धान्ते अन्यस्यो-त्पादनस्य वक्तुमशक्यत्वादिति स्थाने प्राणनमभिहित श्रुत्या। प्राणन त्वस्मद्देहादिषु वायोर्जायते लोका, ततश्च वायुरूपमेव मूलतत्त्व स्यादिति सभावनामपाकर्तुम्, 'अवातम्' इति वातरूपता प्रतिषिद्धा, प्रतिषेधप्रकार-मनाश्रित्य न मूलतत्त्व व्याख्यातु शक्यमित्येतदप्यनेन सूचितम्। तत्र च

प्राणनरूपे जगदुत्पादने शक्तिरेव हेतुरिति 'स्वधया' इति तृतीयान्तेन शक्तिबोधकेन स्वधापदेनाम्नातम्। स्वधापदं हि अन्ननामसु जलनामसु च निघण्टुषु पठ्यते, 'स्वधे' इति द्वितीयान्तं द्यावापृथिवीनामस्वपि पठितम्। एषा च सर्वेषामत्र पूर्वमेव प्रतिषेधः कृत इत्येषा कारणावस्थारूपाशक्तिरेवात्र ग्राह्या। यथा हि ब्रह्मसूत्रेषु प्रथमाध्यायचतुर्थपादारम्भे—

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥
महतः परमव्यक्तमव्यक्तात्पुरुषः परः।
पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः॥

इति कठश्रुतिं स्वपक्षे योजयतां सांख्यानां मतमपाकर्तुम्, 'आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च' इति सूत्रेण कठोपनिषदेव—

आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः॥

इति रथरूपके ये पदार्था विन्यस्ताः, त एवात्र गृह्यन्ते न तु तत्र प्रकृतितत्त्वं विन्यस्तम्, तस्मान्न तदिह ग्रहीतुमुचितम्-इति प्रदर्शिते सिद्धान्ते किं तर्हि अव्यक्तशब्देन ग्राह्यम्, न तु तदव्यक्तशब्देन ग्रहीतुं शक्यत इत्युत्थितायां शङ्कायां शरीरस्य पूर्वावस्था अव्यक्तशब्देन ग्रहीतव्या, अन्यथा श्रुत्योः समन्वयो न स्यादिति समाधीयते। तद्वदेवात्रापि अन्नजलादीनां द्यावापृथिव्यादीनां वा अव्यक्तावस्था मायाशक्तिरेव ग्रहीतुमुचिता भवति। 'स्वस्मिन् मूलतत्त्वे धीयते, स्वं मूलतत्त्वं दधाति पोषयतीति' वा व्युत्पत्तिरपि

मायाशक्तौ युज्यते । ततश्च स्वधया मायया-वा हेतूकृत्येति यावत्-प्राणनम्-जगदुत्पादनमेकस्य श्रुत्या निर्दिष्टम् । ततश्च असदेव जगत् कथमुत्पाद्यते इति शङ्का निराकर्तुमव्यक्तरूपेण जगत सत्ता पूर्वमप्यासीदित्यग्रिमेण मन्त्रेणाम्नायते—

तम आसीत्तमसा गूळ्हमग्रेऽप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छेनाभ्वपिहितं यदासीत्तपसस्तन्महिम्ना जायतैकम् ॥ ३ ॥

आ समन्ताद् दृश्यमानं सर्वमिद जगत् तमोरूपम्—अव्यक्तरूपम्, मायान्त प्रविष्टत्वात् तम पदवाच्यमायारूपमेव वा तमसा अज्ञानेन मायासभूतेन तमोगुणेन वा तिरोहितम्, अग्रे सृष्टे पूर्वमासीत् । तच्च अप्रकेतम्, तस्यानुमितये लिङ्गमपि नासीदित्यर्थ । तत्रोपमामाह सलिलमिति । यथा सलिले निमग्न न किमपि दृश्यते । सलिलस्य तरङ्गा अपि तत्राव्यक्ता न प्रतीयन्ते, तथैव जगत्तमसि लीनमासीदित्यर्थ । भाष्यकारस्तु अस् धातोर्लेटि आसीदित्यस्य स्थाने छान्दसमा इति क्रिया-पद व्याचष्टे । लुप्तोपमेयम् आ इति निपातो वा अनेकार्थत्वादुपमावाचकोऽस्तु ।

कीदृशी सा माया यया जगत्तिरोहितमिति तस्या स्वरूपमाह आभु-व्याप्त महदपीद जगत्, तुच्छेन-अनिर्वचनीयेन केनापि मायापदार्थेन अपिहितम् निगूहितम् आसीत् । आभु सर्वव्यापक तन्मूलतत्त्व वा तुच्छ्येन-माया पदार्थेन अपिहितम आवृतमिवासीत् । यद्यपि तस्य स्वय प्रकाशस्या-वरण न सभवति, तथापि—

घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा मन्यते निष्प्रभं चातिमूढ ।
तथा बद्धवद्भाति यो मूढदृष्टे स नित्योपलब्धिस्वरूपोऽहमात्मा ॥
इत्युक्तदिशा अस्मदादिदृष्ट्या आवृतत्व श्रुत्यानूदितम् इत्यपि सभवति

व्याख्या । अनेन तुच्छपदेन मायाया अनिर्वचनीयता स्फुटीकृता । पूर्वमन्त्रे स्वधाशब्देनानिर्वचनीयमायैवाभिप्रेतेत्यपि तुच्छपदेनानेन व्यञ्जितम् । मनुनाप्येतदनूदितम्—

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् ।
अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

अत्रापि प्रसुप्तम्–इतिपदेन निबोधकेन तन्मूलभूत तमोगुण विशिष्टा मायैवोपलक्षिता । इव पदेन च तस्या अवस्तुत्वम्-अनिर्वचनीयत्व व्यञ्जितमिति । अनया श्रुत्या सत्कार्यवादोऽपि स्पष्ट व्यञ्जित । यत्सदपि कारणावस्थया आवृत तदेव प्रादुर्भवति, यत्तु नास्त्येव तन्नैव जायते ।

"नासतो विद्यते भावो नाभावो विद्यते सत "

इति भगवद्गीता प्रतिपादितात् दृढतमसिद्धान्तात् सिद्धमिदम् । यदि हि असदेव जायते इत्युक्त स्यात, तर्हि को नाम जनिक्रियाया कर्ता ? असत कर्तृत्वासम्भवात् । अकर्तृकायाश्च क्रियाया असम्भवादित्यादि-प्रपञ्च साङ्ख्यदर्शनादौ द्रष्टव्य । तदनन्तर कथमेतदाविर्भूतमित्याह एनमेव तन्मूलभूत ब्रह्म तपस महिम्ना—

"यस्य ज्ञानमयं तप "

इत्युक्तदिशा द्वैतज्ञानरूपेण तपसा अजायत्-व्यजायत इति स्पष्टमेव । इद द्वैतज्ञानमपि मायाशक्तेर्वृत्तिरूपमेव मान्यम्, माया ह्यत्रे पूर्वं निरूपितत्वात् । तत्रापि सर्वभयने विमुद्देश्यम्, इति चेत् कामरूपाया इच्छापरनामधेयाया मा पदवाच्याया मायाया वृत्तिरेव तत्र कारणमित्युच्यते—

कामस्तदग्रे समवर्तताधि मनसोरेत प्रथम यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥

मनस —मन पदवाच्याया मायाया एव रेत गार —, प्रथमम्, प्रधान वृत्तिरूप य काम इति स्पष्टमत्र व्याख्यातम्–इति सायणाचार्य-

तेषां रश्मयो अध उपरि तिर्यक् च विततां इति त एव रश्मयो महिमानं उच्यन्ते, क्षरपुरुषकला वा महिमत्वेन व्याख्येयाः।

सर्वेषामेषामधस्ताद्-आधारभूतापूर्वमवा स्वधा-माया, इयं प्रयति — प्रयत्नपरिणामभूता सृष्टि प्रयत्नोत्पादिका इच्छा वा परस्ताद्भवतीति पुन. स्मारितम्। गम्भीरेषु हि विषयेषु पुन. पुन कथनेनैव ग्रहण भवतीति पुनरुक्तिर्न दोषाय मन्यते। भाष्यकार-श्री माधवाचार्यस्तु सर्वमिदं शीघ्र-मुत्पद्यत इति शीघ्रताबोधनपरत्वेन मन्त्रमिमं व्याख्यातवान्। एषा-पूर्वो-क्तानां कामकर्मादीनाम् रश्मिरिव रश्मि., यथा सूर्यस्य रश्मिः सर्वं जगत् त्वरितं व्याप्नोति तथा वितत., आकाशादिप्रपञ्चं शीघ्रमुत्पाद्य तत्र प्रविष्ट.। अयं चाकाशादिः प्रपञ्च., तथा शीघ्रतया उत्पन्नः यथास्वित् कस्तत्र अधः पूर्वमासीत्, स्वित्-किं वा उपरि पश्चादासीत्, को वा तिर-श्चीन.-तिर्यग्भूत-मध्ये आसीद् इत्येतन्नावधारयितुं शक्यम्। इदं सर्वं मायायामन्त-तिरश्चीन.-तिर्यङ्निहितमासीत्, अध.-नीचै.-उपरि वा निहि-तमासीदिति न ज्ञायते इति वा व्याख्येयम्। तेन मायायाः दुरवगाहता स्फुटीकृता। तन्नोत्पद्यमाने जगति-रेतोधाः-जीवा आसन्-प्रादुर्भूता-जीव-भावेन विज्ञाता इति यावत्। भोक्तारो जाता इत्यर्थः। महिमानः तद्भोग्याः वियदाद्याः शब्दादयश्च विषया आसन्-उत्पन्नाः। तत्र स्वधा अन्नाद्याः भोग्यतया अधस्तात्-अपकृष्टाः भवन्ति, प्रयतिः-प्रयत्नवन्तो जीवास्तु परस्तात्-उत्कृष्टा भवन्तीत्यर्थस्तात्संमतः। महामहिमसु मन्त्रेषु विविधा अर्था. सन्निविष्टा इति कथञ्चिदपि बुद्ध्यताम्। विरोधस्तु व्याख्याया कोऽपि नास्ति-विपरीतार्थप्रतिपादनादिति। विषयस्य दुरवगा-हत्वं पुनर्मन्त्रद्वयेन प्रतिपादितम्—

को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इय विसृष्टि ।
अर्वाग् देवा अस्य विसर्जने नाथा को वेद यत आबभूव ॥६॥

इय विसृष्टिर्यत आबभूव यदि वा दधे यदि वा न ।
यो अस्याध्यक्ष परमे व्योमन् सो अङ्ग वेद यदि वा न वेद ॥७॥

इति सप्तमस्योत्तरार्धेन अविज्ञेयता रूपानिर्वचनीयत्वात्यन्त स्फुटीकृता । अन्यथा सर्वज्ञस्याध्यक्षस्य परमात्मन कथमज्ञान सभाव्यते । वस्तुतस्तु तत्तत्त्वमेवाविज्ञेयम् तत परमात्मापि ज्ञेयता कथ तत्रोत्पादयदित्याशय । श्री गुरुचरणाना दशवादरहस्योक्तरीत्या तु साध्यदेवताम् प्रचलितो नवमो देववाद । दशम सशयवादस्तायमन्त उपन्यस्त । स च सिद्धान्तबोधनेन पूर्वमेव प्रत्याख्यात इत्यन्ते निदर्शनमात्रमिति । तदित्थ मन्त्रभागे शक्ति-विवरण स्पष्ट प्रदर्शितम । श्वेताश्वतरोपनिषदपि—

तमीश्वराणां परम महेश्वर त देवतानां परमं च दैवतम् ।
पतिं पतीनां परम परस्ताद् विदाम देव भुवनेशमीड्यम् ॥

इति मूलतत्त्व प्रकृत्य —

न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
( अध्या० ६, म० ७-८ )

इत्येव शक्ति र्भाविता । उपनिषदारम्भ एव—किं कारण ब्रह्म कुतश्च जाता—इत्यादिना कारण ब्रह्मैव प्रस्तुत्य 'भूताना योनिम्' इति सर्वकारणतया च तन्निर्धार्य यदिह कारणत्वम् तस्य प्रतिपिपद्यते, शक्तिसम्बन्धेनारोप्यमाण कारणत्व त्वनुमायते । तदेव च क्रमेण ब्रह्म

वारोपयितुमारम्भेनूदितम्, एकवाक्यतया स्वाभाविकी ज्ञानबलक्रियापि च शक्तिविशिष्टस्यैव श्राविता इति ।

ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥ (१।३)

इति शक्तिविशिष्टस्यैव कारणाद्यधिष्ठानमाम्नातम् ।

अग्रेऽपि—

स एको वर्णो बहुधा शक्तियोगात्,
वर्णाननेकान् निहितार्थो दधाति । (४।१)
स एको जालवानीशत ईशनीभिः ।
एको हि रुद्रो न द्वितीयाय तस्थुर्यः ।
इमान् लोकानीशत ईशनीभिः ॥

ईशनीभिः —शक्तिभिरित्यर्थः

मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ (४।१०)

इत्यादिना बहुधा शक्तिविशिष्टस्यैव कर्तृत्वं श्रावितम् । शक्तेश्च मायारूपताप्याम्नाता ।

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ (४।५)

इति तस्या बन्धकत्वमप्युक्तम् । यद्यपि मन्त्रेऽस्मिन् ब्रह्मसूत्रेषु भगवता व्यासेन प्रकृतिप्रतिपादनम् प्रत्याख्यातम्, तथापि स्वतन्त्रप्रकृतिप्रतिपादनस्यैव निषेधे तत्र तात्पर्यम्, तेजोऽबन्नानां पूर्वावस्थारूपा ब्रह्मपरतन्त्रा शक्तिरत्र प्रतिपाद्यत इति तु स्वीकृतमेवेति स्पष्टं भाष्ये । तदेव श्वेताश्वतरोपनिषदि शक्तेः पूर्णमेव विवरणमुपलभ्यते । केनोपनिषद्यपि—चेन्द्रा-

गिवायूनां स्वस्यैव शक्तिमत्त्वमभिमन्यमानानां मदोपघाताय महाशक्तिः प्रादुर्भूता, तया च ब्रह्मण एव युष्मासु अनुभूता शक्तिरिति ते देवा अनुशिष्टाः, तस्याश्च उमा हैमवतीति नामैवाम्नातम्। अन्यत्रापि सर्वत्र सृष्टिप्रक्रमे 'स ऐक्षत' 'सोऽकामयत' इत्यादिना ईक्षणकामादिशब्दैः शक्तेरेव कामादिवृत्तय आम्नाताः। त्रिविधभेदरहिते कूटस्थे ब्रह्मणि वृत्तीनामसम्भवात्, ततश्च वृत्तिवृत्तिमतोरभेदप्रक्रियया शक्तिः सर्वत्राभ्युपगतैव, 'मायीसृजति' इत्यादिना मायापदेन तस्या अनिर्वचनीयतापि बोधनमाया।

ज्ञानस्वरूपमत्यन्तं निर्मलं परमार्थतः।

तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ (विष्णुपु० १।२६)

इत्यादिना पुराणेषु बहुधा जगतो मायिकत्वं भ्रान्तिकल्पितत्वं या निरूप्यते। तस्मादनिर्वाच्या भ्रान्तिमूलभूता मायाख्या शक्तिः सर्वश्रुतिपुराणादि प्रसिद्धा, तस्या मायाया एव परिणतिभूताः सर्वे कर्तृत्वभोक्तृत्व-सहतुत्वाद्या धर्माः इति वस्तुतो निर्धर्मकं निर्गुणमपि ब्रह्म मायाशबलित विशिष्टब्रह्मरूपतां गतं सर्वधर्मोपपन्नमनन्तगुणाढ्यं तत्तदाकार विशिष्टं च प्रतीयते, तत्रैव ब्रह्मादिस्तम्बपर्यन्तं सर्वं जगदध्यस्यते इति श्री शङ्करभगवत्पादकृतो व्याख्यामार्गः। अन्येषामाचार्याणां प्रक्रिया कथञ्चिद् भिद्यते।

## शक्तिविषये आचार्याणां मतानि

श्री मद्भगवद्वल्लभाचार्यचरणाः, 'एकमेवाद्वितीयम्' इति श्रुति मूर्ध्नि दधतः परतत्त्वे काञ्चिदपि शक्तिं सृष्टेः पूर्वं नाभ्युपगच्छन्ति। निर्गुणादविकुर्वाणाम्मूलतत्त्वात् सृष्टिः कथमिति प्रश्नं तु तस्यालौकिकेन स्वरूपभूतेन सर्वभवनसामर्थ्येन समादधते। यथा हि कल्पतरु-चिन्तामणि

प्रभृतीनां जगदन्तर्गतानामपि स्वरूपेणाविकुर्वाणानामेव विचित्रपदार्थोत्पादकत्वं भगवदिच्छैव वर्ण्यते, तदा किं नाम दुष्करं स्वेच्छामात्रेण जगदुत्पादयतो भगवत इति। तदेतत्सर्वंभगवत्सामर्थ्यमेव शक्तिपदेन वर्ण्यते चेत्काम वर्ण्यताम्, परं न तद्भगवतः कथमपि भिन्नम्, अपि तु स्वरूपमेव। यास्तु मायाप्रकृत्यादयः शक्तयो व्याख्यायन्ते-ता एतास्तत एव भगवत आविर्भवन्ति, भगवानेव तत्तच्छक्तिरूपेणाविर्भवतीति यावत्। पूर्वं हि निर्धर्मको भगवान् कार्पाससूत्रन्यायेन पूर्वोक्तेन धर्मरूपो भवन् ज्ञानानन्दकामेच्छाक्रियामायाप्रकृतिरूपेण भवति। तत्र कासाञ्चिच्छक्तीनां सर्वदैकरूपतां भगवानेव स्थापयति, कासाञ्चित्तु परिवर्तनशीलताम्। तत्र 'बहुस्याम्' इति अभिध्यानरूपयेच्छया भेदोऽपि परस्परं धर्माणामुत्पादितानां जन्यते, तेन सच्चिदानन्दा अपि परस्परं भिन्नरूपा भवन्ति। एतैश्चाश्रयोऽपि क्रियावान्, ज्ञानवान्, आनन्दी च भेदेनैव प्रतीयते। एभिर्धर्मैरेव च स भगवत्पदवाच्यो भवति, सर्वतः पाणिपादः सर्वतोऽक्षिशिरोमुखः सर्वतः श्रुतिमान् सर्वविरकश्च भवति। धर्मरूपतां गतस्य भगवतः सदंशादव्यक्तम्, बाह्या जीवबन्धका प्राणाद्या चिदंशाद्दशविधप्राणसम्बन्धमापद्य जीवाः, आनन्दांशाच्च तन्नियामका अन्तर्यामिणो आयन्ता तृतीयमाविर्भावरूपास्वरूपसृष्टिप्रक्रिया। तदित्थं श्रुतिपुराणादिषु या शक्तिरेकरूपानेकरूपा वा व्याख्याता, सा सर्वापि सृष्टिकाले मूलतत्त्वादाविर्भवति, न तु मूल एव सा मन्तव्या। मूले तु स्वरूपभूतं सामर्थ्यमेव शक्तिपदेन क्वचिदभिहितम्। 'एकं वा इदं विबभूव सर्वम्' 'पुरुष एवेदं सर्वम्' इत्यादिश्रुतिशतैरेतदेवाम्नायते। अत्रैव पुराणानामप्यनुकूलता। विष्णुपुराणे हि—

परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज।
व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम्॥

प्रधानपुरुषा व्यक्तकालानां परमं हि यत्।
पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम्॥ (अध्याय १।१५-१६)

इति स्फुटं त्रिगुणात्मिकाया अव्यक्तरूपायाः शक्तेर्विष्णुरूपत्वम्, शुद्धं तु तस्य परमं रूपमिति वदता भगवता पराशरेण परतत्त्वाद्विष्णोः प्रधानस्योत्पत्तिरभिव्यञ्जिता। पाद्मेऽपि च स्वर्गखण्डनाम्ना मुद्रिते सर्गखण्डे (२, अध्याये) निर्गुणं ब्रह्म प्रतिपाद्य—

'तस्मात् प्रधानमुद्भूतं ततश्चापि महानभूत्'

इत्यादिना प्रधानपदवाच्यायाः प्रकृतेर्ब्रह्मण उत्पत्तिः स्पष्टमाख्याता। एवं ब्रह्मवैवर्ते च ब्रह्मखण्डे द्वितीयतृतीयाध्याययोर्मूलतत्त्वात् कृष्णात् सिसृक्षावशेन पूर्वं गुणत्रयोत्पत्तिं प्रतिपाद्य, नारायणशिवब्रह्मणां धर्मस्य च तत्तदङ्गेभ्यः प्रादुर्भावमुक्त्वा सरस्वतीलक्ष्मी-मूलप्रकृतिरूपदुर्गाणामप्यासां च वरुणानी-प्रभृतीनां तत्तत्स्वशक्तीनां प्रादुर्भावो व्याख्यातः। सेयं प्रक्रिया पूर्वप्रतिपादितप्रक्रियानुकूलैव। सच्चिदानन्दानामेव साकारतया नारायणादिरूपतया वर्णनात्। श्री भागवते च—

'सा एतस्य संद्रष्टुः शक्तिः सदसदात्मिका माया नाम'

इति यत् तृतीयस्कन्धे पञ्चमाध्याये उक्तम्—तत्र संद्रष्टृपदेन जीव एवाभिप्रेतः। तेन जीवानामुत्पत्तिमभिव्यज्य तन्मोहिका सदसदात्मिका माया व्याख्याता—इति तस्या मूलतत्त्वादाविर्भूतत्वमनुक्तमपि स्पष्टं सिद्ध्यत्येव। मयेति अस्मदर्थकं विभक्तिप्रतिरूपकमव्ययम्। तत्सम्बन्धित्वादियं मायोच्यत इति मायानिर्वचनमपि जीवसम्बन्धितामेव व्यापयति। इय

यत्प्रत्याययति जीवम्, तज्जगद्वस्तुतो ब्रह्मरूपतया सत्, तद्भिन्नत्वेन च प्रत्याययतीत्यसत्, आत्मापि चास्यामन्यरूपेण भासत इति निरूप्येयं सदसदात्मिका प्रोच्यते। यद्वा मोहिका मायास्वरूपेण सती, अन्यथा सन्तमर्थमन्यथा बोधयतीति बोधनांशेत्वसती। एवं सदसद्रूप आत्मा स्वरूपमस्या इति सदसदात्मिका सा उक्ता। तत एव च द्वितीयस्कन्धे पूर्वोक्ते (५।१७) पद्ये ईक्षामात्रेण स्वस्य प्रेरणा ब्रह्मणाभिहिता, न तु काचिदन्या शक्तिस्तत्र व्याख्याता। ईक्षा च तत्र प्रादुर्भवतीति न कोऽप्यत्र विप्रवदेत्।

स एष आद्य पुरुषः काले काले सृजत्यजः।
आत्मात्मन्यात्मनात्मानं संयच्छति च पाति च॥

इति (५।३८) पद्ये द्वितीयेस्कन्धे च आत्मन एव स्रष्टात्व सृष्टत्वं करणत्वमाधारत्वं चोद्घुष्टमिति मूलतत्त्वे शक्त्यादिसम्बन्धो प्रत्याख्यात एव। सृष्टिप्रतिपादिका श्रुतयश्चापीक्षामात्रमभिदधति, नत्वीक्षाप्रयुक्त्यादिका काचिच्छक्तिस्तत्राभिहिता। ईक्षा तु आधारभूत आत्मन्येव प्रादुर्भवतीति सर्वसंवेद्योऽप्यमर्थः। न चोपपत्त्यापि शक्त्या परतत्त्वस्य सम्बन्ध सम्भवतीति स्वमेव शक्तिवादिभिः स्वीकृतम्। श्रुतिरेवात्र प्रधानं प्रमाणमिति तर्केणोपपत्त्यापि न किञ्चिद्धीयते। ततश्च मूलभूतस्य सामर्थ्यतादात्म्यम्, अनन्तरोत्पन्नानां शक्तीनां चाश्रयाश्रयिभाव एतस्या प्रक्रियाया स्पष्टं भवति।

अथ श्रीमद्भगवद्रामानुजाचार्या चिदचितोरव्यक्त पदाभिधेयां सूक्ष्मावस्थामेव परमात्मनः शक्तिं मन्यन्ते, मूलतत्त्वस्य परमात्मनोऽनन्तकल्याणगुणगणाश्रयतया सर्वधर्मोपपन्नत्वेन सृष्ट्यनुपपत्तिप्रश्नस्तेषां सिद्धान्ते नैवाविर्भवति, कूटस्थे सर्वथा परिणामशून्ये कथं सृष्टिं वर्त्तते-

स्यैव प्रपञ्चोऽवशिष्यते, अनया च श्रुत्या शरीरशरीरिरूप परमात्मन सम्बन्ध , इय सूक्ष्मावस्था शरीर परमात्मन , तस्या आत्मभूतश्च परमपुरुष , सूक्ष्मावस्थामेव स्वप्रेरणया स्थूलरूपता प्रापयतीत्येषैव जगदुत्पत्ति । नामरूपविभागानर्हं सूक्ष्मदशापन्नप्रकृतिपुरुषशरीर ब्रह्म कारणावस्थम्, नामरूपविभागविशिष्टस्थूलचिदचिच्छरीर तु कार्यावस्थम् । उभयविध परमात्मा एक एवेति विशिष्टयोरद्वैतपदार्थ ।

'तदनन्यत्वमारम्भणशब्दादिभ्य '

( ब्र० सू०, अ० २, पा० १, सू १४, अधि० ६ )

इति सूत्रकृतापि कार्यकारणयोरभेद एवाद्वैतरूप । यथा लोके देवदत्तोऽयम्, मैत्रोऽयम्, बलिष्ठो विद्वान् परमानन्दी देवदत्त इत्यादिना शरीरशरीरिणोरैक्यमेव व्यवह्रियते तथैव शक्तिशक्तिमतोरैक्य श्रुतिस्मृत्यादिषु व्यवहृतम् । बहुषु पुराणेष्वव्यक्ताभिधाया प्रकृतेरव सृष्टि प्रतिपाद्यते, परमात्मनस्त्वधिष्ठातृता प्रेरकता च प्रोच्यते यथा सर्वादिभूते ब्रह्मपुराणे—

अव्यक्त कारण यत्तन्नित्य सदसदात्मकम् ।
प्रधान पुरुषस्तस्मान्निर्ममे विश्वमीश्वर ॥ ( अ० १।३३ )

त ऊचुर्ब्रह्म मुनिश्रेष्ठा ब्रह्माणममितौजसम् ।
स्रष्टार सर्वभूताना नारायणपरायणम् ॥ (१।३४) इत्यादि ।

पाद्मे सृष्टिखण्डे (२ अ०) भीष्मपुलस्त्यसवादे च सृष्टिकथनारम्भे—

पूर्वं हि पद्मशयनादुत्थाय जगत प्रभु ।
गुणव्यञ्जनसभूत सर्गकाले नराधिप ॥ ( २।८० )
सात्त्विको राजसश्चैव तामसश्च त्रिधा महान् ॥ इत्यादि ।

एवमादौ परमात्मनः प्रेरकत्वमव्यक्तभूतायाः प्रकृतेश्चोपादानत्वं स्पष्टं वर्ण्यते। तस्या सदसदात्मकत्वं तु परिणामित्वेनैकरूप्याभावाद् व्यवहृतम्। पुरुषपदेन च जीवोऽपि ब्रह्मपुराणेऽभिहित एव सृष्टेः पूर्वावस्थायाम्। तस्मात् प्रकृतिर्जीवश्चेत्युभयमपि शरीररूपेण नित्यसंबद्धं ब्रह्मणेति स्फुटीभवति। वायुपुराणे तु सर्वकारणत्वेन प्रकृतेरेव ब्रह्मशब्दवाच्यतापुपचारेण प्रतिपादिता—

अव्यक्तं कारणं यत्तु नित्यं सदसदात्मकम्।
प्रधानं प्रकृतिं चैव यमाहुस्तत्त्वचिन्तकाः॥ (वा०पु० ४।१७)
जगद्योनिमहद्भूतं परं ब्रह्म सनातनम्।
विग्रहं सर्वभूतानामव्यक्तमभवत् किल॥ (४।१८)
अनाद्यन्तमजं सूक्ष्मं त्रिगुणात्मकमव्ययम्।
असांप्रतमविज्ञेयं ब्रह्माग्रे समवर्तत॥ (४।२०)
तस्यात्मना सर्वमिदं व्याप्तमासीत्तमोमयम्।
गुणसाम्ये तदा तस्मिन् गुणभावे तमोदये॥ (२१)
सर्गकाले प्रधानस्य क्षेत्रज्ञाधिष्ठितस्य वै।
गुणभावाद् वाच्यमानो महान् प्रादुर्बभूव ह॥ (२२)

अत्र विशेषणैः प्रकृतिवर्णनं स्फुटमेवप्रतीयते। तस्मादेव ब्रह्मत्वमप्युक्तम्। क्षेत्रज्ञाधिष्ठानं च तस्योक्तमेव—क्षेत्रज्ञश्च पुरुषः ईश्वर.। ततश्च ब्रह्मपदमत्रोपचारिकमेव। प्रधानमेव तु सृष्टिकर्तृ तथाप्रोक्तमिति पूर्वोक्ता प्रक्रियैव शरीरशरीरिरूपा लभ्यते।

एवं पुराणान्तरेष्वप्यव्यक्तादेय सर्वप्रतिपादकेषु प्रक्रियेयमनुसंधातव्या। प्रकृतिस्वातन्त्र्यं न प्रतिपादयन्ति पुराणानि इति यत् मूलतत्त्व-

प्रतिपादके प्रकरणे सुस्थिरीकृतम् तत्त्वत्रापीष्टमेव । शरीरभूतायाः प्रकृतेर्ब्रह्मप्रेरणयैव प्रवृत्त्युपगमात् स्वातन्त्र्यासिद्धेः । केषुचित् पुराणेषु ब्रह्मणएव सृष्टेरभिधानमपि नास्माकं विरुद्धम् । विशिष्ट एव ब्रह्मत्व व्यवहारात् । चिदचिच्छरीर-ईश्वर एव ब्रह्मपदाभिधेय इति अचितो ब्रह्माशभूतायाः प्रकृतेर्जाता सृष्टिर्ब्रह्मणो जातेत्युचितमेवोक्तम् । 'सदेव-सोम्येदमग्र आसीत्' इत्यादि श्रुतिषु सत्पदेनापि शरीरविशिष्टमेव ब्रह्माभिधीयते, तदेवं ईक्षया स्वेच्छया स्वकृपयलोकिपगुणरूपया प्रकृत्यंशेन जीवांशेन च बहुत्वमापद्यते विभिन्न नामरूपावस्थो भवतीति न किञ्चिदनुपपन्नम् ।

'य पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयतिर्यं पृथिवी न वेद यस्य पृथिवी शरीरम् । योऽप्सु तिष्ठन्नपोऽन्तरो यमयति' इत्याद्यन्तर्यामिब्राह्मण-स्वस्य सिद्धान्तस्य जीवातुभूतमेव । साक्षान्नारायणप्रोक्तः पाञ्चरात्राभि-धस्तन्त्र-ग्रन्थश्चास्य सिद्धान्तस्य मूलभूतः । सर्वे च शब्दास्तं तं पदार्थम-भिदधानास्तच्छरीरकं ब्रह्मैव प्रतिपादयन्तीति 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिना स्फुटमुच्यते । तस्य मनो वागतीतत्वं तु न निर्धर्मकतया, अपि तु अनन्तगुणतया प्रतिरोमानन्तब्रह्माण्डानां सन्निवेशान्मनसि वाचि वा सर्वेषां समावेशासंभवेन बोध्यम् । सूक्ष्मावस्थायां नामरूपविभागाभावे मनो वाग्वा न प्रसरतीति वा प्रसराभाव.तत्र्य व्याहरत्तुम् । चिदचितोः प्रसुप्तावस्थाद्येव च सूक्ष्मावस्थायाम् 'एकमेवाद्वितीयम्' इत्यमुच्यते, तदेतद् 'प्रसुप्तमिव सर्वतः' इति मन्वादिषु 'सुप्त इवैततरलुप्तदृक्' इति भाग-वतादिषु च स्पष्टीकृतमेव ।

सत्वं रजस्तमइति निर्गुणस्य गुणास्त्रयः ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभो. ॥ (श्रीभाग०२।५)

इति श्री भागवते गुणाना ग्रहण नाम प्रसुप्ताना सूक्ष्मावस्थाना प्रबोधनम्-कार्यक्षमतासम्पादनमेव । 'कार्यकारणकर्तृत्वे द्रव्यज्ञानक्रियाश्रया' इत्यग्रे कार्यजनकत्वन्तु गुणानामेव स्पष्टमुक्तम् । एवमग्रे—

कालं कर्मस्वभावं च मायेशो मायया स्वया ।
आत्मन् यदृच्छया प्राप्तं विबुभूषुरुपाददे ॥
( श्रीभाग० २।५।२१ )

इत्यग्रे कालादीनामुपादानमपि कार्यकरणे तत्प्रेरणरूपतयैव पर्यवस्यति । ब्रह्मव्यतिरिक्तस्य कस्याप्यस्वीकारेण स्वाव्यतिरिक्तस्य ग्रहणासंभवात् । 'आत्मन् यदृच्छया प्राप्तम्' इति शरीरत्वं स्पष्टमेवाभिव्यज्यते । मायया-प्रोक्ता विचित्रार्थसर्गकर्त्री भगवच्छक्तिरेव, नत्वनिर्वचनीया काचित् । अन्यत्रासुरादिमायासु अवितर्कितार्थ-जननशक्तेरेव मायाशब्देन कथनात् । ततश्च शक्तिपदेन यदि भगवतो लौकिकानन्तगुणान्तर्गतं सामर्थ्यमभिधीयते-तदा तयाशक्त्या भगवतो गुणगुणिभाव समवाय, स्वरूपं तादात्म्यं वा तत्तद्दर्शनेषु गुणगुणिनोरभ्युपगत. सम्बन्ध आस्थेयः । यदि तु स्थूल जगज्जननी चिरसंचितोः सूक्ष्मावस्था शक्तिपदेन व्याख्यायते तदा शरीरशरीरिणोरिव तस्या अभेद, भेदः, उभय वा सम्बन्धतया स्वीकर्तुं युज्यते । ईश्वरं व्यतिरिच्य सा कदापि नोपलब्धुं शक्यत इति तद्गुणीभूततया तदाकारतया अभेद उच्यताम् । ईश्वरः प्रेरक—तस्या. परिणमयिता, सा त्ववस्था परिणम्यत इति प्रेर्यप्रेरकभावेन भेदोऽप्युच्यताम् । उभयरूपेण विवक्षया च भेदा-भेदावित्ति सिद्धान्तेऽस्मिन् सिद्धा प्रक्रिया । या कर्याचन्

पुराणादिषु ब्रह्मण प्रकृतेर्मायया वा उत्पत्तिरभिहिता, सा प्रसुप्तावस्थायास्तस्य प्रेरणया कार्यक्षमत्वसपादन एव पर्यवसन्नेति सर्वमत्र सामञ्जस्यमुपपादमिति ।

एव श्री निम्बार्काचार्यभगवत्पादा अपि प्रपञ्चेन सह भगवतो भेदाभेदौ व्याचक्षाणा प्रपञ्चमूलभूतया प्रकृत्याख्यशक्त्यापि भेदाभेदावेवाभ्युपगच्छन्ति । पूर्वमेकोऽपि सर्गानन्तरमनेकधा भिन्नो भवतीति हि तेषा प्रक्रिया । शक्तिरपि प्रसुप्ता तावद् ब्रह्मणा सहाभिन्नैव, जाग्रद्दशायान्तु भिद्यते इति भेदाभेदौ व्याख्येयौ । द्वैतवादिन श्रीपूर्णप्रज्ञभगवत्पादास्तु प्रकृत्याख्यशक्ते सर्वथा भिन्नत्वमेव निर्धारयन्ति, केवल भगवदधीना सा भगवत्प्रेरणया प्रवृत्ता जगत्सृजतीत्येव स्वस्वामिभाव प्रकृत्या सह भगवत सम्बन्ध । स्वतन्त्रो हि भगवान्, तस्येच्छैव महामाया, अविद्या, प्रकृति रित्यादिभि पदैरुच्यते । मयाशब्द प्रकृष्टवाची ।

तच्छाखारूपेणैव स्वसिद्धान्त स्थापयन्त श्री चैतन्यमहाप्रभुपादाश्चाचिन्त्यभेदाभेदसिद्धान्तमुपयन्तोऽनिर्वचनीयतामनुसरन्त्येव । तदित्थमुपासनाप्रधानतया आगमसिद्धान्त बहुष्वशेष्वनुवर्तमानानामपि श्रुत्याधारेण ब्रह्मसूत्राधारेण च स्वसिद्धान्त प्रतिष्ठापयता वैष्णवसप्रदायाना प्रक्रिया दिङ्मात्र दर्शिता । शैवशाक्तसप्रदायदर्शनप्रक्रिया तु आगमप्रक्रियायामग्रे प्रदर्शयिष्यते । एषा च विभिन्नत्वेन प्रतिभासमानानामाचार्यसिद्धान्ताना समन्वयोऽप्यग्रे वैज्ञानिकप्रक्रियाया प्रदर्श्येत ।

## दर्शनान्तरेषु शक्तिविचारः

अन्यत्रापि दर्शनेषु शक्तिस्वरूपादिक चिन्त्यते । तत्र पूर्वमीमासका सर्वेषु पदार्थेषु कार्यकरणानुकूला शक्ति पृथगेव मन्यन्ते । पृथक् पदार्थत्व च

या एवं व्यवस्थापयन्ति-तस्यैव पदार्थस्य कदाचित्कार्यजनकत्वं दृश्यते, कदाचिच्च न। यथा वह्नेः सुप्रसिद्ध दाहकत्वम्, पर चन्द्रकान्तमणिसमवधाने तत् फलेपिधायक भवति। आम्रादिषु च कदाचिदेव मञ्जरी-फलाद्युत्पद्यते न सदा। यदि वह्निवृक्षादिकमेव दाहफलादि-कारण स्यात्, तदा सदैव स्वकार्यं कुर्यात्। अन्वयव्यतिरेकाभ्या विना न कार्यकारणभाव उपपद्यते, स्फुट चात्रान्वयव्यभिचारो दृश्यते इति तत्तत्कार्यकारणीभूता काचित् पृथगेव मन्तव्या, सा च कदाचित् स्वहेतुभिरुत्पाद्यते, कदाचिच्च नश्यति, तिरोभवति वा। यथा ऋतुसलिलादिसपदा आम्रादिषु फलजननशक्तिरुत्पाद्यते, तद्वियोगेन च नश्यति। घृतेन्धनादिसमवधानेन वह्नौ दाहानुकूला शक्तिरुत्पाद्यते, वृद्धिं च नीयते, मण्यादिसमवधानेन तु नाश्यते, आव्रियते वा। कदाचित् प्रचुरकार्यकरणेन कार्यपाटवेन वा शक्तेरुत्कर्षापकर्षावप्यनुमातु शक्येते। द्रव्यस्यैव कारणत्वे तु प्रचुराल्पकार्यजननम्, कार्यपाटवे न्यूनाधिकतापि च नोपपद्येताम्, कारणस्यैकरूपस्यैव प्रत्यक्षेणोपलम्भादिति तेषा युक्ति। एव शक्तेर्वृद्धिह्रासावुत्पत्ति विनाशौ च कार्यगम्यौ यत्र किञ्चित्काल कार्यं न जायते, पुनस्तत्रैव जायते, तत्र शक्तेस्तिरोभाव, अग्रेत्वाविर्भाव उन्नेय। यत्र तु पुनस्तत्र कदाचिदपि तत्कार्यं न दृश्यते तत्र तु विनाश एवोन्नेय इत्याविर्भावतिरोभावावपि क्वचिद् व्याख्यायेते। एव कार्यपाटवापाटवाभ्या वृद्धिह्रासावनुमेयावित्यादि तन्मनसार। अत्रेद विचार्यम्, एवमपि शक्तेरैकान्तत पृथक्त्व नोररीकर्तु शक्यते कारणेभ्यो द्रव्यादिभ्य पृथक् कदाप्यनुपलम्भात्। यस्मिन् हि कारणे या शक्तिर्निहिता सा तत्सबद्धैव सदा प्रतीयते। न तु ततोऽन्यत्र क्वापि तदुपलम्भ। यच्च यत पृथक् कदापि नोपलभ्यते, न तत्तत. सर्वथा

भिद्यत इति सांख्यवेदान्तादिषु समभ्युपगत सिद्धान्त । अतएव गुणकर्मादीनां सामान्यविशेषयोश्च द्रव्यात् पार्थक्यम्, अवयवावयविनोश्च पार्थक्य तत्र नाभ्युपगम्यत एव । किञ्च मीमांसका अपि जातेर्व्यक्त्यपेक्षया सर्वथा भिन्नत्व नाभ्युपगच्छन्ति । यदि हि घटत्वादिजातिर्घटादिभ्य सर्वथा पृथग्भूता स्यात्, तर्हि एवमेव घट पश्यतो घटघटत्वे इति द्विरवप्रतीति स्यात्, तस्मात् भेदाभेदावेव जातिव्यक्त्योरिति तेषामभ्युपगम । तथैव प्रक्रियया वह्नि तेन जायमान दाह च दृष्टवतोऽपि वह्निर्वह्निशक्ती अभिसन्धाय द्वाविति बुद्धि कदापि कस्यचिन्नोदेति, तस्माज्जातिवच्छक्तेरपि भेदाभेदावेव सिद्धयत । पार्थक्यस्वीकारे च शक्त्याश्रयेण शक्ते सम्बन्ध कश्चिदेष्टव्य , न च समवायो मीमासकै पृथगभ्युपगत इति तादात्म्यमेव तन्मते सम्बन्धो वाच्य । तादात्म्य च नाम भेदसहिष्णुरभेद इति भेदाभेदयोरेव पर्यवसानम् । न च भेदाभेदावेकत्र कथ स्यातां, अभेदो हि नाम भेदाभाव , यद्यस्ति भेदस्तर्हि कथ भेदाभावो भवतु स्यातामिति स्पष्टमिद भेदाभेद-खण्डन प्रकरणे भामत्यां निरूपित श्री वाचस्पतिमिश्रै । तस्माद-निर्वचनीयतायामेव मीमांसकमतस्यापि पर्यवसानम् ।

नैयायिकास्तु पृथक्शक्ते सद्भावविनाशको , तत्प्रागभावादेश्च सर्वत्रानन्तानां स्वीकारे पर गौरवमभिप्रयमानास्तत्तत्कारणनिष्ठा स्वरूपयोग्यताभिधा कारणतामेव शक्तिपदेन व्यवहरन्ति । सत्यपि कारणे यत्र तत्र कार्य न दृश्यते-तत् प्रतिबन्धकवशात् सहकारिणामसन्निधानाद्वा समाधेयम् । तेषां हि मते न कार्य प्रति किञ्चदेकमेव कारण नियामकम्, अपि तु कारणसामग्री कार्यं प्रति नियामिका । यत्समवधाने कार्यमुत्पद्यते, असमवधाने च नोत्पद्यते तानि सहकारिकारणानि । देश , काल , अदृष्टम्

(भोक्तुर्धर्माधर्मो) ईश्वरेच्छा चेत्यादीनि सर्वत्र सहकारिकारणानि भवन्ति। प्रतिबन्धकाभावश्चाप्यस्या सामग्र्या निवेश्यते, पृथगेव वा तस्य कार्यप्रतिरोधकत्वं स्वीक्रियते। सलिलसेकादिकन्तु अङ्कुरादीन् प्रति प्रातिस्विकं सहकारिकारणं भवति। एभिरेव कारणे वर्तमाना स्वरूपयोग्यता फलोपधायिनी भवति। न तु कारणे किमप्येभिनव सहकारिभिरुत्पाद्यते, प्रतिबन्धकेन नाश्यते वा। प्रतिबन्धकेन कार्योत्पत्तिरेव प्रतिबध्यत इत्यादिस्तदीया प्रक्रिया। तदेवं स्वरूपयोग्यतारूपा कारणतैव शक्तिपदार्थतया तैरभ्युपगता। सा च 'अन्यथासिद्धिशून्यस्य नियतपूर्ववर्तिता'। तत्रान्यथासिद्धयभावस्तावदभावपदार्थे एवान्तर्भूत। नियतत्वं च व्यापकत्वम् तदपि स्वसमानाधिकरणात्यन्ता-भावप्रतियोगित्वाभावरूपम्। तत्तत्कार्यनियतपूर्ववृत्तित्वं नामतत्तत्कार्यप्राक्क्षणावच्छेदेन तत्कार्याधिकरणवृत्तियों भाव, तत्प्रतियोगित्वाभावरूपमित्यभाव एव शक्तेरन्तर्भावं प्राप्नोति। ये तु तत्तत्कार्यनियतपूर्ववृत्तित्वं नाम तत्तत्कार्यप्राक्क्षणावच्छेदेन तत्तत्कार्याधिकरणकाभावप्रतियोगितानवच्छेदकधर्मकत्वम् इति विवृण्वते, तद्रीत्या तत्तत्कारणासाधारणधर्मो दण्डत्वादिरेव जनकतारूप सिद्धयति। तस्य प्रतियोगितावच्छेदकभिन्नत्वरूपेण ग्रहणे जनकतारूपता, दण्डसमवेतत्वरूपेण ग्रहणे तु जनकतावच्छेदकता इति स्वरूपभेदात् स्वस्यैव स्वावच्छेदकत्वरूपो दोषो नापतति। एवम् अन्यथा सिद्धिशून्यत्वमपि तत्तत्कार्यनिरूपितान्यथासिद्धतानवच्छेदकधर्मवत्त्वमिति तदपि दण्डत्वादिकारणासाधारणधर्मरूपतायामेव पर्यवस्यतीति भावरूपैव जनकता, सैव च भावरूपा शक्ति, जनकता नामातिरिक्त एव पदार्थ इत्यप्यस्ति मत केषाचिद् ग्रन्थकाराणाम्। तन्मतेत्वतिरिक्तशक्तिवादिभि सह नाममात्रे

विवाद पर्यवसित । तैः शक्तिनाम्नातिरिक्त पदार्थ स्वीकृत एभिस्तु जनस्तानाम्नेति । आस्तां नाम । अस्मिन्नपि मते भावरूपा शक्ति । यच नियतत्वे सति पूर्ववर्तित्वं च कारणलक्षण व्याक्रियते तदापि पूर्वक्षण-सम्बन्ध कालिक-सम्बन्धरूप इति स एव शक्तिपदाभिधेय स्यात् । सोऽपि स्वरूपसम्बन्धविशेष इति कालरूपैव कारणरूपैव वा शक्ति सिद्ध्येत् । तन्नाभावरूपत्वे कारणेन सह स्वरूपसम्बन्ध शक्ते सिद्ध्यति, भावरूपत्वे तु समवाय सम्बन्ध अतिरिक्तपदार्थत्ववादेऽपि स्वरूपसम्बन्ध एव स्यात् । दण्डत्वादितत्तत्कारणासाधारणरूपता च यदा शक्ते पर्यवसिता तदा जातिव्यक्त्योर्दर्शनान्तरे भेदानभ्युपगमादाश्रयेण सह शक्तेरभेद एव सिद्ध्यति । आधाराधेयतादिव्यवहाराच्च कथंचिद् भेदेऽपि । दण्डत्वा-दावपि केनचिद् रूपेण शक्तित्वम्, केनचित्तु घटत्वावच्छेदकत्वमित्यभेद-मात्रेण भेदाभेदावेवापतत । न चैकत्र भेदाभेदावुभयसम्भव इत्यनिर्वचनीय-तायामेव पर्यवसानम् । तदित्थं भावाभावरूपतया अनिश्चिता शक्ति अन्यानुवद्भिरनिर्वचनीयत्वेन-नैयायिकैरपि प्रकारान्तरेण स्थापितेति विभाव्यं सुधीभिः ।

विभिन्नतया कल्पिताः शक्तिशक्तिमतोः सम्बन्धा एव ईश्वरस्यापि तदीयशक्त्या सहानुभातव्यास्तत्तत्प्रक्रिययेति तन्मतमप्यत्र मनागुपदर्शितम् ।

इत्थं शक्तिविशिष्टस्य ब्रह्मणो जगत्कारणत्व उपपादिते शक्तेराश्रयतया ब्रह्मण एव मुख्यत्वं केचन मन्यन्ते-तदाश्रयणं विना शक्तेः स्वरूपालाभात् । केचित्तु शक्तिमन्तरेण ब्रह्मणो अकिंचित्करत्वाच्छक्तेरेव प्राधान्यं ब्रुवते । यथोक्तं सौन्दर्यलहर्याम्—

शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं ।
न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ॥
अतस्त्वामाराध्यां हरिहरविरिञ्च्यादिभिरपि ।
प्रणन्तुं स्तोतुं वा कथमकृतपुण्यः प्रभवतु ॥

ब्रह्मवैवर्तपुराणे प्रकृति खण्डे २ अध्याये च स्पष्टमस्या उक्तेर्मूलम्—

यथाग्नौ दाहिका चन्द्रे पद्मे शोभा प्रभा रवौ ।
शश्वद्युक्ता न भिन्ना सा तथा प्रकृतिरात्मनि ॥७॥
विना स्वर्णं स्वर्णकारः कुण्डलं कर्तुमक्षमः ।
विना मृदा कुलालो हि घटं कर्तुमनीश्वरः ॥८॥
नहि क्षमस्तथात्मा च सृष्टिं स्रष्टुं तया विना ॥९॥

अत्र पूर्वमेकत्वा अनन्तरं तु उपादानकारणता प्रकृतेरभिव्यञ्जिता परमात्मनः सर्वप्रवृत्तिकारणत्वमपि च समाख्यातम्—

सर्वं शक्तिस्वरूपा सा तया स शक्तिमान् सदा ।
ऐश्वर्यवाचकः शक च ति: पराक्रमवाचकः ॥
तत्स्वरूपा तयोर्दात्री सा शक्तिः परिकीर्तिता ।
ज्ञानं समृद्धिसंपत्तिर्यशश्चैव बलं भगः ॥

इति च प्रकृतेर्गुणसम्बन्ध उक्त ।

'ये चैव सात्विका भावा राजसास्तामसाश्च ये ।

मत्त एवेति तान् विद्धि ॥' (७।१२)

इत्यादावपि च गुणा प्राकृता उक्ता, गुणानामेव च जनकत्वमुक्तम्, तेन मायाप्रकृत्योरेकत्वमेव प्रतिभासते ।

'सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।'

मयाध्यक्षेण प्रकृति सूयते सचराचरम् ॥

इत्यादौ सर्गप्रलयकारणत्वे प्रकृतिशब्द एव व्यवहृत ।

'प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया ।'

इत्यत्रापि भिन्नत्वैकत्वतया चोभयथापि व्याख्या कृता । व्याचक्षते सप्तमाध्याये आरम्भे तु प्रकृतिपदेन महाभूताद्या जीवाख्याभिहिता परापर नाम्ना । तत्रापि तु तेषा सूक्ष्मावस्थारूपा प्रधानाख्या एवाभिप्रेता इत्यग्रे व्याख्यास्यते पुरुषनिरूपणे ।

*"मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।"*

इति श्वेताश्वतरश्रुतौ च माया प्रकृत्योरैक्यं मुखादेवोक्तम् । श्रीभागवतेऽपि सर्गे मायाया साहचर्यं प्रतिपादयद्भि पद्यैर्मायाप्रकृत्योरैक्यमेव व्यक्तीकृतम् । तदित्थं श्रीशङ्कराचार्या मायाप्रकृत्योरैक्यमेव तत्र तत्र व्याचक्षते, एकामेव च शक्तिमभ्युपगच्छन्ति । कार्यभेदात्तु तस्याभेद उपचारेण तत्रतत्र व्यवहृत । तस्या एव चाज्ञानरूपात्मस्वरूपाच्छादकत्वमाज्ञानपदाभिधेयाया मायाया आवरणविक्षेपाभिधे द्वे कार्ये, जीवस्य ज्ञानमावृणोति सा न ब्रह्मतत्त्वप्रतिभानं ददातीत्यावरणं तस्या कार्यम् । आवरणमिदं जीवदृष्टेरेवेत्युक्तं प्राक् । लोकदृष्ट्या तु ब्रह्मैवा-

वृत व्यवह्रते घनच्छन्नार्कवदिति। आवृते च ब्रह्मणि विभिन्नजगद-ध्यारोपण विक्षेपाभिध कार्यम् इति।

श्री रामानुजाचार्यमते तु माया भगवतो विचित्रा शक्ति, प्रकृतिस्तु सर्वजडजगदुपादान शरीर भगवत इत्युक्तमेव। श्री वल्लभाचार्याणा शुद्धाद्वैत-सिद्धान्ते भगवत आविर्भूता मायाप्रकृत्याख्या पृथगेव स्वीकृता। मायापि च तत्र द्विविधा जगत्सर्गकर्त्री भगवच्छक्तिरेका, जीवमोहिका मिथ्यतारूपा तु द्वितीया। या भगवद्रूपे निर्विकार एव प्रपञ्चे भेद विकारान्, स्वस्वामि-भावादि, पुत्रकल्त्रादिभावादच ससाररूपान् असत एव प्रतिभासयति, सैव जीवाचरिका भगवदुत्पादितापि जीवशक्तित्वेन व्यवहृता 'सा वा एतस्य सद्रष्टु' इत्यादौ श्रीभागवतपद्ये। प्रकृतिस्तु सवत प्रथम जगदुपादानत्वेन निर्मित मुख्य भगवद्रूपमिति प्रस्थानरत्नाकरे श्री पुरुषोत्तमगोस्वामिभि-रुक्तम्। तस्याश्च षड्लक्षणानि—

१—त्रिगुणात्मकत्वम्–साम्यावस्थोपलक्षितगुणत्रयरूपतैति यावत्। ते च पृथक्–पृथगवगम्यमानास्तस्या धर्मा अप्युच्यन्ते, एवं सच्चिदानन्दाना भगवद्रूपाणामाविर्भाविका अम्नाता।

२—अव्यक्तम्–कस्मिन्नपि काले व्यक्तता न याति।

३—नित्यम् त्रैकालिकम्, कालादीनामपि जनकम्।

४—सदसदात्मकम्–कारणकार्यरूपावस्थम्।

५—अविशेषम्–सर्वान् जीवान्प्रति सामान्यम्।

६—विशेषवत्–बुद्ध्यादीन् विशेषान् प्रकटीकृत्य तूष्णीं भवतीत्यादि। अन्येप्यत्र शक्तिभेदा जायन्ते।

# आगमशास्त्रप्रक्रिया

अथ आगमशास्त्रे तदनुयायिनि प्रत्यभिज्ञादर्शने चापि शक्तीनां बहुतरं विवरणमुपलभ्यते। तत्र हि सृष्टेः पूर्वं परमेश्वरे भगवति परमशिवे अविभागेन स्थिता स्वातन्त्र्यरूपा पूर्णाहन्ताभिधा परा शक्तिरभ्युपगम्यते। प्रकाशरूपो द्रष्टा परमशिवः, तदभिन्ना विमर्शरूपा दृश्या च परा शक्तिः। उभावपि चिद्रूपौ, न तु दर्शनान्तरवज्जडा शक्तिरिहाभ्युपगम्यते, चितिः, चिच्छक्तिरित्यादिनामभिरेव सा शक्तिर्व्यवह्रियते। एतदेव तु शिवशक्त्योर्वैलक्षण्यम् यत्परशिव एकरूप एव सदा तिष्ठति, चिच्छक्तेस्तु निमेषोन्मेषपदाभिधेयौ सङ्कोचविकासौ सततं क्रमेण प्रादुर्भवतः। विकृतिः, परिणामो वा तस्या अपि नाभ्युपगम्यते, स्वरूपाप्रच्युतेः। तत्रापि शाङ्करवाद्द्वैतवादस्थैरुभयमपि प्रक्रियाभेदेन प्रतिपाद्यते। परशिवः, चिच्छक्तिः, बिन्दुरिति त्रयोऽपि मूलतो भिन्ना इति द्वैतिनां प्रक्रिया। तत्र शिवश्चिद्रूपः बिन्दुर्जडः, चिच्छक्तिस्तूभयत्रानुगतोभयं संयोजयति, सा च शिवगता चिद्रूपा, परिणामविरहिता। बिन्दुगता तु जडेव, परिणामिनीव चाभाति। महामाया माया प्रकृतिरिति बिन्दोरेव त्रयो विभागा विरला अवरतरा वा। महामाया बिन्दुरूपैव जगत्सृजति, शुद्धा च सेति तत्प्रपञ्चोऽपि शुद्धः। तज्जन्या माया तु शुद्धरूपेण स्थितस्य प्रतिबिम्बरूपेण विपरीतावभासिनी-त्यशुद्धा प्रोच्यते, तज्जन्य प्रपञ्चोऽपि गुणत्रयाविलोऽशुद्धः, इत्थं च सूक्ष्म शुद्धः, स्थूलोऽशुद्धश्चेति द्विविधः प्रपञ्चोऽभ्युपगम्यते, शुद्धप्रपञ्च योगिनां सिद्धानामेव भासते। स्थूलेनैव तु प्रपञ्चेन व्यवहर्तॄणामपा-

प्रमातार सकला जीवा । मायाया एव कञ्चुकपञ्चकम्, तेन बद्ध परिच्छिन्न पुरुष इति जीव इति वा व्यवह्रियते, तत्सहचारिणी शक्तिश्च प्रकृति, सैव पुरुषभोग्य प्रपञ्चमारचयति। तज्जन्याश्च तत्त्वाना विविधा शक्तय इत्यादि । इयमेव प्रक्रिया बहुष्वशेषु वायुपुराणनाम्ना प्रसिद्धे ब्रह्माण्डपुराणे विवृतावलोक्यते, तत्रारम्भे तृतीयाध्याये सृष्टि प्रस्तुत्य—

समासबन्धैर्नयतैर्यथातथ ,
विस्तरयोगेनापि मत्र प्रहर्षिणीम् ।
यस्या च यद्वा प्रथमा प्रवृत्ति ,
प्राधानिकी चेश्वरकारिता च ॥

यत्तत् स्मृत कारणमप्रमेय,
ब्रह्म प्रधान प्रकृतिप्रसूति ।
आत्मा गुहायोनिरथापि चक्षु ,
क्षेत्र तथैवाक्षरमव्ययञ्च ॥

शुक्र तमस्सत्वमतिप्रकाश,
तद् व्यापि नित्य पुरुष द्वितीयम् ।
तद्भमय पुरुषेणसु कृ-
स्वयम्भुवालोकपितामहेन ॥ (७,८,९)

इति सृष्टिविषयमभिव्यज्य क्षेत्रज्ञस्य प्रकृतेश्चोभयोरपि सृष्टिकारणत्वमुक्त्वाग्रे चतुर्थाध्याये तद्विवरणप्रसङ्गे—

अव्यक्त कारण यत्तु नित्य सदसदात्मकम् ।
प्रधान प्रकृति चैव यदाहुस्तत्त्वचिन्तका ॥ (४।७)

पालनशक्तिर्ज्येष्ठा, संहारशक्तिश्च रौद्री, निवृत्ति प्रतिष्ठा, विद्या शान्ति शान्त्यतीता चेति कलारूपा ब्रह्मविष्णुरुद्रेश्वरसदाशिवाना शक्तय इत्यादि प्रपञ्च शक्तीनाम्। सेय प्रक्रिया ब्रह्मवैवर्ते दृश्यते। कृष्णाभिधानात् परतत्त्वादेव तत्र दुर्गाराधादिसर्वशक्तीना प्रादुर्भाववर्णनात्। नारायण शिवादीना चेश्वराणामपि तत एव प्रादुर्भाववर्णनात्। आगमेष्विव शक्तीनामेव सर्वोत्पादकत्वप्रतिपादनाच्च य आगमे परस एवात्र पुराणे कृष्ण इति नामभेदमात्रमिदमिति न विस्मर्तव्यम्।

श्री भागवतेऽप्यागमिकया अद्वैतप्रक्रियया क्वचिदाभास प्रत्यभिज्ञायते। यथाह्यागमे परमशिवाच्छिवशक्त्योर्ग्राहकग्राह्ययो पृथक् पृथक् प्रादुर्भावे ग्राह्याभावाच्छिवतत्त्व शून्यातिशून्यपदेन व्यवह्रियते, तथाऽत्रापि तृतीयस्कन्धे—

> स वा एष तदा द्रष्टा नापश्यद् दृश्यमेकराट्
>
> *मेने सन्तमिवात्मान सुप्तशक्तिरसुप्तदृक्।* (५ अ० २४)

इति द्रष्टुरसत्त्वेन मननमुक्तम्। अग्रे च—

> कालवृत्त्या तु मायायां गुणमय्यामधोक्षज।
>
> पुरुषेणात्मभूतेन वीर्यमाधत्त वीर्यवान्॥

इति वीर्यशब्देन प्रतिबिम्बरूपतया शक्तौ प्रवेशोप्यागमक्रियोक्तोऽपि व्यक्तीकृत इत्यादि सुसूक्ष्म पर्यालोच्यम्। अग्रे च शक्तेरेव सृष्टिजनकत्वमुक्तमिति। सेय शैवागम प्रक्रिया। शाक्तागमेषु तु शक्तिरेव परतत्त्वमुच्यते। परतत्त्व हि सर्वथा गुणलिङ्गादिविवर्जितमपि प्रतिपादनविधिनिर्वाहाय पुस्त्वेन स्त्रीत्वेन नपुंसकत्वेन वा कथमपि विव्रियताम्, न तत्र यत्किञ्चिद्भेदो विरोधो वा। तदेव जगता पितृभूत मातृभूत चेति पुस्त्वेन

स्त्रीत्वेन वा वक्तु शक्यते। "स्त्रीपुंभेदो न गण्यते" इति हि स्पष्ट ब्रह्मवैवर्ते प्रकृतिखण्ड उक्तम्। वस्तुतस्तु तत् कार्यकारणातीतमिति ब्रह्मपदेन नपुसकलिङ्गेनापि व्यवह्रियत एव। तस्मात्सर्वमूलत्वेन शाक्तागमेषु प्रतिपाद्यमाना शक्ति परब्रह्मरूपैव। सैव क्रीडार्थं पुरुष प्रकल्पयतीत्यग्रे पुरुषोत्पत्तिप्रक्रिया। परब्रह्मणि या शक्ति श्रुतिपुराणादिषु समन्युपगतेत्युक्तम्। सा तत्र छायारूपेच्छाशक्तिरिति व्यपदिश्यते। स्वातन्त्र्य च तत्रैव मूलभूताया पराशक्तौ, तदपि तस्या शक्तिरूपम। अग्रे च ज्ञानक्रियादिशक्तीनाम यासाञ्चपूर्वोक्ताना प्रादुर्भाव। सेय प्रक्रिया देवीभागवते पुराणे विवृता। तत्र प्रथमस्कन्धे द्वितीयाध्याये—

सृष्ट्वाखिल जगदिद सदसत्स्वरूप,
शक्त्या स्वया त्रिगुणया परिपाति विश्वम्।
सहृत्य कल्पसमये रमते तथैव,
ता सर्वं विश्वजननी मनसा स्मरामि ॥ ५ ॥

इति मङ्गले स्मरणविषयतया भगवतीस्वरूप सक्षेपतो निदर्शयन्—

निर्गुणा या सदानित्या व्यापिकाऽविकृता शिवा।
योगगम्याऽखिलाधारा तुरीया या च सस्थिता ॥ १९ ॥

इति मूलतत्त्वरूपेण भगवत्या स्वरूपमुक्त्वा—

तस्यास्तु सात्त्विकी शक्ति राजसी तामसी तथा।
सरस्वती महालक्ष्मीर्महाकालीति तास्त्रय ॥२०॥

तासां तिसृणा शक्तीना देहाङ्गीकारलक्षण।
सृष्ट्यर्थंश्च समाख्यात सर्वशास्त्रविशारदै ॥ २१ ॥

हरिद्रुहिणरुद्राणां समुत्पत्तिस्ततः स्मृता।
पालनोत्पत्तिनाशार्थं प्रतिसर्गस्ततः स्मृतः॥ २१॥

इति तस्याः वाक्ययोऽर्था विवृता। पुरुषरूपतयोत्पादनमपि च दिङ्मात्रेण दर्शितम्। अनुसर्ग एव चात्र प्रतिसर्गशब्दार्थः। अग्रे च सप्तमस्कन्धे, द्वात्रिंशोऽध्याये देवीगीतायां देव्या हिमालयं प्रत्युपदेशः —

अहमेवास पूर्वं तु नान्यत्किञ्चिन्नगाधिप।
तदात्मरूपं चित् संवित्परब्रह्मैकनामकम्॥ २॥
अप्रतर्क्यमनिर्देश्यमनौपम्यमनामयम्।
तस्य काचित् स्वतः सिद्धा शक्तिर्मायेति विश्रुता॥ ३॥
पावकस्योष्णतेवेयमुष्णांशोरिव दीधितिः।
चन्द्रस्य चन्द्रिकेवेयं ममेयं सहजा ध्रुवा॥ ४॥

अत्रैव 'न गतौ सा नागता सा" इति पूर्वोक्त शब्दशक्तिलक्षणत्वं स्वीयमायया विवृतम्। जीवानां कर्माणि, कालादि सर्वं चात्रैव शक्तौ विलीनमभेदेनेत्यपि प्रतिपादितम्। तेन सा भगवती ब्रह्मरूपा, तस्याः शक्तिश्च मायाख्या तदभिन्ना विवृता। तृतीयस्कन्धे तु षष्ठेऽध्याये ब्रह्मविष्णुशिवानां विमानमधिष्ठाय बहुषु ब्रह्माण्डेषु परिभ्रम्य तत्र पृथक् पृथक् ब्रह्मविष्णुशिवान् कैलासवैकुण्ठादीन् चान्येषां विस्मितानां यदा नन्दनमुपगम्य भगवत्याः पादान्तिकं आगतान्, तदा देवी ब्रह्माणं शक्तिरूपतामेव स्वस्याः स्वमुखेनाह—शक्तिशक्तिमतोरभेदं च। अत्र परमात्मा पुरुष पूर्वप्रश्न इत्यादिनाऽऽह परामृष्ट—

सदैकत्वं न भेदोऽस्ति सर्वदैव ममास्य च।
योऽसौ साऽहमहं योऽसौ भेदोऽस्ति मतिविभ्रमात्॥ १॥

भावयोरन्तरं सूक्ष्मं यो वेद मतिमान् हि सः ।
विमुक्तः स तु संसारान्मुच्यते नात्र संशयः ॥ ३ ॥

पूर्वं भेदस्य मतिविभ्रमजन्यत्वमुक्त्वाऽग्रे भेदज्ञानान्मुक्तिरिति विरुद्धमिव यदुक्तं तदग्रे स्फुटीक्रियते—

एकमेवाद्वितीयं वै ब्रह्म नित्यं सनातनम् ।
द्वैतभावं पुनर्याति काल उत्पित्सुसंज्ञके ॥ ४ ॥
यथा दीपस्तथोपाधेर्योगात्संजायते द्विधा ।
छायेवादर्शमध्ये वा प्रतिबिम्बं तथावयोः ॥ ५ ॥
भेद उत्पत्तिकाले वै सर्गार्थं प्रभवत्यज ।
दृश्यादृश्यविभेदोऽयं द्वैविध्ये सति सर्वथा ॥ ६ ॥
नाहं स्त्री न पुमांश्चाहं न क्लीबं सर्गसंक्षये ।
सर्गे सति विभेदः स्यात् कल्पितोऽयं धिया पुनः ॥ ७ ॥

अनेन सिसृक्षया परमशिव परमात्मा स्वशक्तिं स्वेच्छयैव पृथक् करोति, तत्र च स्वप्रतिबिम्बं पश्यतीति आगमदर्शनप्रक्रिया सर्वाप्यनूदिता । सर्गेऽपि बिम्बप्रतिबिम्बयोरिव द्रष्टृबुद्धिजन्यो नाममात्रेण भेद इति चोपसंहृतम् । कार्येश्वराणां कार्यब्रह्मेति वेदान्तग्रन्थेष्वाख्यातानां ब्रह्मविष्णुशिवानां च तस्याः परशक्तेरेवोत्पत्तिरग्रे विवृता । माया प्रतिबिम्बितचिद्रूपता च भगवत्या देवीभागवतनवमस्कन्धव्याख्याया नीलकण्ठेन व्याख्याता समुद्धृते कूर्मपुराणवचनेऽपि सुस्फुटा—

चिन्मात्राश्रयमायाया शक्त्याकारे द्विजोत्तमाः ।
अनुप्रविष्टा या संविन्निर्विकल्पा स्वयंप्रभा ।
सा शिवा परमादेवी शिवाभिन्ना शिवंकरी ॥ इति ।

इयमेव सूक्ष्म भेद काल्पनिक जानाना ब्रह्मविद्यामुक्ति प्रागुक्ता । ये तु मूलत एव जगदुत्पादकं तत्त्वं प्रकृतिनाम्ना पुरुषाद्भिन्नमाचक्षते, तेषा सांख्यादीना मतिविभ्रममुक्त्वा निन्दाकृता ।

श्रुतावपि ऋग्वेदे श्रूयमाणमाम्भृणीयसूक्त मूलतत्त्वस्य स्त्रीत्वख्यापके चित्तदर्शने जीवात्मभूतमस्त्येवेति विवेच्यता सुधीभि । उद्दिश्य मूलभूताया शक्तेरेकत्वमनेकत्वम्, मायाप्रकृत्योर्भिन्नत्वमभिन्नत्वञ्चेत्युभयमप्युपलभ्यते पुराणागमादिषु वेदान्तसम्प्रदायेषु च । सत्त्व रजस्तम इति गुणत्रयमेव प्रकृति, माया तु गुणत्रयवती त्रिगुणेत्यपि भेद क्वचिन्निरूप्यते । मूलतत्त्वविचारभूता शक्तयस्तु सर्गादिशक्तिरूपेणानेका एव सर्वत्र व्यवहृता —

' सर्गाद्या भावशक्तय "
' गृहीतशक्तित्रितयाय''
सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय ।
स्थितिसर्गनिरोधेषु गृहीता मायया विभो ॥ (श्रीभा०२।५।१८)

इत्यादिषु त्रिगुणानामेव शक्तीना निरूपणं दृश्यते । प्रकृतिगुणेषु रज उत्पादकम् सत्त्व स्थितिकर्तृ पालकम्, तमस्त्वावरक संहर्तृ इति प्रायेण सर्वत्र निरूप्यते । देवीभागवत-मार्कण्डेयपुराणादिषु महाकाली-महालक्ष्मी-महासरस्वतीरूपेण स्वीकृतासु तत्तद्गुणप्रधानासु शक्तिषु तु रज प्रधाना महालक्ष्मी पार्थिनी, महाकाली च तम प्रधाना संहर्त्री, सैव चोत्पादिकेति प्रक्रिया प्रतीयते । यो हि संहर्ता, स एव सर्वं महत्स्थाने तिष्ठति, ततश्च स एवाद्ये उत्पादकोऽपि भवितुमर्हति । अन्यत्र कस्यचित् तन्त्र-भीमगन्धादिति समाधानं । महासरस्वती तु सत्त्वप्रधाना ज्ञानाधिष्ठात्री आनन्दिनी स्वरूपमुक्तिसाधकत्वेनास्य प्रसादिनी ।

मार्कण्डेयपुराणान्तर्गतसप्तशतीस्तोत्रप्रकरणे हि महामायाया विष्णुनिद्राभूताया महत्त्वं सूचितम्, तस्या एव च ब्रह्मस्तुताया विष्णु-प्रबोधकत्वोक्ता। सृष्टिप्रतिपक्षमधुकैटभव्यामोहविनाशकतया च महत्त्वमपि तस्या एव व्यञ्जितम्। उत्तरेषु देवादिषु तत्र सर्वत्र कारणेषु कार्येषु चानन्येनानुप्रविष्टाया तत्तत्प्रधानरूपेण प्रादुर्भूताया महालक्ष्म्या तत्र परिणामभूतक्रोधादिरूपमहिषासुरादीनां विनाशकत्वेन जगत्त्राणकत्व स्पष्टीकृतमेव। महासरस्वत्याश्चाहङ्कारममतारूपशुम्भ-निशुम्भनिहन्तृतया आत्यन्तिकलयरूपमुक्तिप्रदातृताभिव्यञ्जिता, समाधिवैश्याय मुक्त्यर्थं ज्ञानप्रदत्ता स्पष्टीकृता चेत्यवधेयं सुसूक्ष्ममा-लोच्य। सप्तशतीरहस्यत्रयेऽत्याभिन्ने सत्वतमसी प्रेरकतया रजोगुणस्यैव प्राधान्यमभिलक्ष्यैव सर्वादित्वं सर्वोत्पादकत्वं च व्याख्यातम्। तदुत्पादितयोस्तमस्सत्वाधिष्ठात्र्योर्महाकालीमहासरस्वत्यो स्वयं महाल-क्ष्म्याश्च ब्रह्मविष्णुशिवानां तच्छक्तीनां चोत्पादकत्वमुपवर्ण्य रजोऽधिष्ठा-तुर्ब्रह्मण, तमोऽधिष्ठात्र्या स्वरया सह सम्भूय सृष्टिकारिता, सत्वाधिष्ठा-तुर्विष्णो रजोऽधिष्ठात्र्या लक्ष्म्या सह पालकता, तमोऽधिष्ठातु शङ्करस्य च सत्वाधिष्ठात्र्या उमया सहाभेदकत्वेन जगद् व्यवस्थापकतान्वे महत्ता चोक्ता। तदित्थ–रजस्तमसो सष्टृत्व सत्वरजसा पालकत्वम् तम सत्वयो–र्व्यवस्थापनत्व महत्त्वमात्यन्तिकलयरूपमुक्तिजनकत्व चा लभ्यते। जगद्व्यवस्थाया हि सत्वतमसोरुभयोरपि हेतुत्वमनुभव सिद्धमेव आत्यन्तिके लयेऽपि च रजोनिरोधकत्वेन तमस सहकारिता समुपदिष्टा स्यात्। वस्तुतस्तु गुणत्रयस्य सर्वदैवाविनाभावेन स्थिततया कदापि सर्वथा पार्थक्यानुपलम्भेन सम्भूयैव सर्वत्र कारणत्वमिति एकैकस्य

द्वयोर्वाकारणत्वाभिधानं प्राधान्यविवक्षामूलकमेव, विवक्षा च वक्तुरभि-प्रायानुसारिणी इति यथाकथञ्चिदप्युपपादने प्रक्रियाभेदमात्रमेव न तु कोऽपि विरोधप्रसङ्ग इत्याकलनीयं विवेकदृशा ।

अथ ब्रह्मवैवर्तस्य प्रकृतिखण्डे देवीभागवतस्यैकादशे स्कन्धे च पञ्च शक्तिवाद उपलभ्यते ।

गणेशजननीदुर्गा राधा लक्ष्मीः सरस्वती ।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चधा स्मृता ॥
आविर्बभूव सा केन का वा सा ज्ञानिनां वर ।
किं वा तल्लक्षणवत्स को वा वक्तुं क्षमो भवेत् ॥ इति ।

(ब्रह्मवैवर्त प्रकृतिखण्डे १ अध्याय १-२ श्लोक)

ब्रह्मवैवर्तस्य ब्रह्मखण्डान्ते ऊनत्रिंशेऽध्याये नरनारायणाश्रमे गत्वा नारद कुत सृष्टिर्जाता, सर्वे च ब्रह्माद्या कमुपासत इत्यादि पृच्छति । तदुत्तरे नारायण त्रिंशेऽध्याये प्रथम ब्रह्मरूपेण कृष्णं स्तौति । अथ सृष्ट्युत्पादकतां नित्याया प्रकृतेराचष्टे । सा प्रकृतिर्ब्रह्मरूपैवेत्यपि नारायणेन प्रकटीकृतम् ।

ब्रह्मस्वरूपा प्रकृतिर्नभिन्ना यया च सृष्टिं कुरुते सनातनः ।
शिवश्च सर्वाश्रया जगत्सु माया च सर्वे च यया विमोहिताः ॥

नारायणी सा परमा सनातनी
शक्तिश्च पुंसः परमात्मनश्च ॥
आत्मेश्वरश्चापि यया च शक्ति-
स्तया विना स्रष्टुमशक्त एव ॥ १२ ॥

एतेन शक्तेर्ब्रह्मतादात्म्यमेव स्पष्टमेवोद्घुष्टम् । सृष्टौ शक्ते प्राधान्यञ्च यदस्माभिरागमप्रकरणे पूर्वमुक्तम् तदपि स्पष्टैरक्षरैरत्र प्रतिपादितम् ।

इयं च कृष्णस्य प्राणाधिष्ठात्री देवी सर्वेषामाराध्या चेत्युक्त्या चिद्रूपैवेय मित्यपि निःसशयं ज्ञायते, जडस्याराधनाया क्वचिदप्यनुपदिष्टत्वात्। अग्रे प्रकृतिखण्डे च—

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टौ प्रकृष्टा या देवी प्रकृतिस्सा प्रकीर्तिता॥
(अ० १, श्लोक ४)

इति नामनिर्वचनेन सृष्टावस्या प्राधान्यं पुनरनूदितं दार्ढ्यार्थं—

गुणेप्रकृष्टसत्वे च प्रशब्दो वर्तते श्रुतौ।
मध्यमे रजसि कृश्च तिशब्दस्तमसि स्मृतः॥ ५॥
त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता।
प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते॥ ६॥
प्रथमे वर्तते प्रश्च कृतिश्च सृष्टिवाचकः।
सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्तिता॥ ७॥

इति तस्या गुणत्रयात्मकता सृष्टौ प्राथम्यं प्राधान्यं पुनः पुनर्निर्वचनरूपेणानूद्य—

योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः।
पुमांश्च दक्षिणार्द्धाङ्गो वामाङ्गः प्रकृतिः स्मृता॥ ८॥

इति भगवतः कृष्णस्यार्द्धाङ्गत्वं तस्याः स्पष्टमुक्तम्। अभेदश्च भूयो भूयः उद्घुष्टः। तेन यदस्माभिः पूर्वमागमप्रक्रियायां ब्रह्मरूपता शक्तेः स्वता साप्यत्र स्पष्टीभवति।

अतएव हि योगीन्द्राः स्त्रीपुंभेदं न मन्वते।
सर्वं ब्रह्ममयं ब्रह्मन् शश्वत् पश्यन्ति नारद॥

इति चोभयरूपेणोपासनमपि स्पष्टमुद्घुष्यते।

अस्या एव च प्रकृतेः सृष्ट्युपयोगाय पञ्चरूपता व्याख्यायते स्म । तत्र दुर्गा तेजोरूपा, तेजसोऽधिष्ठात्री, लक्ष्मी, सम्पदधिष्ठात्री, तृतीया सरस्वती शुद्धसत्त्वरूपा बुद्ध्यधिष्ठात्री सावित्री वेदमाता ब्रह्मतेजोमयी ब्रह्माख्यवेदस्याधिष्ठात्री, पञ्चमी राधा च पञ्चप्राणस्वरूपा परमानन्दरूपा परमाह्लादरूपा रासेश्वरी, निर्गुणा निराकारा निर्लिप्तात्मस्वरूपिणी निरीहा भक्तानुग्रहविग्रहेत्यादिभिर्विशेषणैः स्तुता कृष्णवक्षःस्थलस्थिता चोक्ता । तेनेदं स्फुटीभवति—सच्चिदानन्दविशिष्टस्य ब्रह्मणः पञ्चधर्माः—स्वप्रकाशनापरपर्यायं त्रिकालाबाध्यसत्तारूपं तेजः, सर्वशक्तिरूपा सम्पत्, सर्वज्ञतारूपा बुद्धिः, जगद्रचनार्थं ब्रह्मणे दातव्या वेदाः, स्वरूपभूतः प्रकटतां गत आनन्दश्चेति । तेषामेषां धर्माणामधिष्ठातृतया सर्वत्र धर्माणामेषां सञ्चारकतया च प्रकृतेः पाञ्चविध्यमुररीकृतम् । इमा एव पञ्चशक्तयः विशिष्टे ब्रह्मणि वर्तमानान् तत्कार्यभूते जगति सञ्चारयन्ति । आह्लाद-शक्तिरूपा राधा ब्रह्मापि स्वानन्दमनुभावयति, परत्रापि च तदानन्दं सञ्चारयति स्वयं च तदानन्दमनुभवतीति चैतन्यमहाप्रभुसम्प्रदाये व्याख्यायते । यद्यपि ब्रह्म स्वयमानन्दरूपम्, परं तस्यानन्दस्यानुभवो राधाख्यायाः शक्तेः साहाय्येनैव भवति । तेन तस्याः कृष्णान्तःकरण-रूपता सिद्ध्यति, अन्तःकरणवृत्तेरेवानुभावकतया प्रसिद्धेः । एवमन्या-सामपि शक्तीनां तत्तद्धर्माधिष्ठातृत्वं तत्सञ्चारकत्वं चानुसन्धेयम् । कृष्ण-स्वरूपभूतानां तेनाविर्भावितानां सगुणस्वरूपाणां सर्वाः शक्तयः कृष्णेनैव तेभ्यो विभज्य दत्ताः । शिवस्य भगवतः दुर्गा आदिशक्त्यभिधा, पूर्वं शिवेन विवाहो न स्वीकृत इति कृष्णेन दुर्गा स्वलोक एव स्थापिता । शुम्भ निशुम्भ दैत्यवधोत्तरमपि दक्षादनन्तरं हिमालयाज्जन्म गृहीत्वा शिव-

परतो भविष्यतीत्याद्यपि ब्रह्मखण्डे निरूपितम् । तेन मुक्तेषु त्रिकाला-बाध्यसत्ताशब्दवाच्यस्य तस्या प्रतीपत्वं । मुक्तिप्रदस्य शिवस्य शक्तित्वात् अहन्ता-ममतारूपशुम्भनिशुम्भघातकत्वाच्चेति लक्ष्मीः सरस्वती चेति द्वे विष्णोः शक्ती । पालने सत्त्वरजसोरुभयोरप्यपेक्षणादित्युक्तं प्राक् । सावित्री ब्रह्मणः शक्तिः, ब्रह्मा वेदस्य अग्रसृजतीत्यग्रे विस्तरेण व्याख्यास्यते । राधा तु कृष्णस्यैव शक्तिः, अतएव—निर्गुणत्वं तस्याः व्याख्यातम् । तस्याः अपि ब्रह्माण्डसृष्टावुपयोगोऽग्रे ब्रह्माण्डोत्पत्तिनिरूपणे व्याख्यास्यते । इत्थं च विवक्षाभेदेन त्रिगुणात्मैव पञ्चविधत्वं वैचित्र्याय व्याख्यातम् । पूर्वोक्त-युक्त्या सङ्कर्षणेन प्रथमसृष्टत्वमिति दुर्गाया एवादिसृष्टिजनकता संहर्तृता च न विस्मर्तव्या । सावित्र्यास्तथा उत्तर सृष्टिजनकतेति ।

अथ प्रकारान्तरेणापि व्याख्यास्याम । प्रत्यभिज्ञादर्शने ह्यागमिके परतत्त्वस्य परमशिवस्य पञ्चधर्माः पञ्चमुखरूपा व्याख्यायन्ते-परमानन्दः, पूर्णं ज्ञानम् त्रिकालसम्बन्धशून्या सत्ता, सर्वभवनसामर्थ्यम्, सर्वकर्तृता चेति । एते एव धर्माः सङ्कुचिताः रागविद्याकालनियतिकलारूपेण पञ्चकञ्चु-कतामासाद्य जीवं घ्नन्तीति तत्र निरूप्यते । तत्र यः परमशिवः स एवात्र कृष्णः । सञ्ज्ञाभेदमात्रमिदम् । तस्मिंश्च ये एते पञ्चधर्माः, त एव पञ्चशक्तिरूपेणात्र निरूपिताः, आनन्दो राधारूपेण, ज्ञानं सरस्वती-रूपेण, सत्ता दुर्गा रूपेण, सर्वभवनसामर्थ्यं सावित्री रूपेण । तस्य सामर्थ्यस्य वेदरूपत्वादित्यग्रे वेदमूलकसृष्टि-निरूपणे स्फुटीभविष्यति । सर्वकर्तृत्वं च लक्ष्मी रूपेणेति । यद्वा सृष्टिः, पालनम्, संहारः विलयः, अनुग्रहश्चेति पञ्चशिवस्य कर्माणि तत्रैव दर्शने व्याख्यायन्ते तेषां पञ्चानां सम्पादनाय पञ्चशक्तयोऽपेक्ष्यन्ते । वेदधारणे सृष्टौ सहकारिणी सावित्री,

पालने सहकारिणी लक्ष्मी, संहारे सहकारिणी दुर्गा, आत्यन्तिकलये मुक्तिरूपे ज्ञानद्वारेण सहकारिणी सरस्वती, अनुग्रहे च सहकारिणी राधेति । तदिदं सर्वं विवक्षाभेदमात्रम्, संक्षेपविस्तारयोर्विवक्षाधीनत्वात्, विवक्षायाश्च वक्तुरधीनत्वात्, वस्तुतस्तु त्रयोऽपि गुणाः सम्मिलिता एव सर्वत्र कार्येष्वपेक्ष्यन्ते । तत्तद्गुणस्य तत्र तत्र कार्ये प्राधान्यमात्रं भवतीति प्रागुक्तं स्मर्तव्यमेव ।

एवमेवागमे शक्तेर्दशभेदा दशानां महाविद्यानां रूपेण व्याख्यायन्ते । तत्र सृष्टेः पूर्वामवस्थामारभ्य सृष्टेः पूर्णतापर्यन्ता दशावस्थास्तत्तन्महाविद्यारूपेण निरूप्यन्ते—सर्वाद्या भगवती काली, सर्वान्तिमा च षोडशीति । तदेतदप्रकृतत्वान्नेह प्रपञ्च्यते ।

अस्यायं निष्कर्षः—वैदिकी आगमिकी चेत्युभयविधापि प्रक्रिया पुराणेषूपलभ्यते, तत्र च वैविध्यं प्रतिपादनप्रक्रियायामेव, न तु वास्तविको भेदः । तदेव हि तत्त्वं निर्गुणनिराकारतया स्वीयेन वास्तवेन रूपेण वैदिकप्रक्रियायां प्रतिपाद्यते, उपासनार्थं सालम्बनाधारात् प्रवृत्तस्य तु उपासनाप्रधाने आगमशास्त्रे तत्रापि च मूलतत्त्वस्य निराकारता विज्ञपित एव । तथा हि ब्रह्मवैवर्ते ब्रह्मखण्डे द्वितीयेऽध्याये—

ज्योतिः समूहं प्रलये पुरासीत् केवलं द्विज ।
सूर्यकोटिप्रभं नित्यमसंख्यं विश्वकारणम् ॥ ४ ॥
स्वेच्छामयस्य च विभोस्तज्ज्योतिरुज्ज्वलं महत् ।
ज्योतिरभ्यन्तरे लोकत्रयमेव मनोहरम् ॥ ५ ॥

इत्यादिना पूर्वं निर्गुणतयैव मूलं वस्तूक्त्वा गोलोकनाथ—कृष्णरूपेण साकारेण संवर्णितम् । तत्रैव च सर्वेषामुत्पत्तिरुक्ता । एवमन्यत्रापीत्युपदर्शितमनेकधा प्राक् । तेनोपासनासिद्ध्यर्थं प्रक्रियाभेदमात्रमिदम्, न तु

वास्तविको भेदो विरोधो वेति स्फुटीभवति । उपासनाधिकारिणां भिन्न-रुचित्वाच्च तस्यैकस्यैव मूलतत्त्वस्य विभिन्ना आकारा विभिन्नानि च दुर्गालक्ष्मीकृष्णविष्णुरामशिवपशुपतिहिरण्यगर्भस्वयम्भूसूर्यगणेशप्रमुखानि नामानि व्यवह्रियन्ते, तदेतत्सर्वं प्रतिपादनप्रक्रियाभेदमात्रम् । न तु तत्र कोऽपि विशेषः, एकस्यैव विभिन्नाभिर्विधाभिः प्रतिपादनात् । श्रुतिष्वपि चैतानि विभिन्नानि नामरूपाण्युपलभ्यन्त एवेति न शास्त्राणां परस्परभेदः । मूलतत्त्वं चेदं शक्तिसहकारि जगज्जनयतीत्यत्रापि सर्वेषां शास्त्राणां सम्मतिः प्रदर्शिता । तत्र च केचन शक्त्याश्रयं परमात्मानं प्रधानं मन्यन्ते, परे तु सर्वकारणीभूतां शक्तिमेवेति पुराणेषु क्वचिद् ब्रह्मणः सृष्ट्युपक्रमः, क्वचिच्च प्रकृतेर्मायया इति तदपि वर्णनशैलीभेदमात्रम् । विशिष्टस्य कारणत्वेन उभयत्राप्युक्तिसम्भवात् । औपासनिकानां वैष्णवशैवशाक्त्यादीनि दर्शनान्यपि च भूयसा तान्त्रिकीत्यपरपर्यायामागमिकीं प्रक्रियां संगृह्णन्ति, तत्र कानिचिद् वैदिक्या प्रक्रियया सहागमिकीं योजयन्ति, अन्यानि तु शुद्धामागमिकीमेवावलम्ब्य प्रवर्तन्ते, परं तत्र श्रुतिं तान्यपि प्रमाणयन्त्येव । प्रत्यभिज्ञादर्शनमिव शैवदर्शनमप्यागमिकीं प्रक्रियामेवाङ्गी-कृत्य प्रवर्तते, तत्रापि परमशिवो मूलतत्त्वम्, शक्तिस्तच्छरीरम् । शक्ति-रचितं "ईशानादिभिः" पञ्चभिर्मन्त्रैस्तस्याङ्गानि कल्प्यन्ते । ईशानं मस्तकं, तत्पुरुषवक्त्रं, घोरमन्त्रहृदयं, वामदेवगुह्यं, सद्योजातपाद ईश्वर इति । इमे मन्त्रा याजुषे स्वाध्याये प्रसिद्धाः । परमशिवस्य स्वातन्त्र्य नाम परा शक्तिरिहाभ्युपगम्यत एव । अनुत्तरपदाभिधेया चित्, आनन्दः, इच्छा, ज्ञानं क्रिया चेति पञ्चमुखानि शिवस्य विधीयन्ते । आनन्दोऽत्र शक्तिविशिष्टस्यैव रूपभेदेन वा विकासः ।

इच्छा, ज्ञानम्, क्रियाचेति त्रय शक्तेरेव विकासाः । साकारशरीरप्रदर्शनं भक्तानुग्रहार्थमेव । शक्तिविशिष्टस्यैव च शिवस्य पञ्चकृत्यकारित्वमप्युच्यते — सृष्टिस्थितिसंहाराः, तिरोभावानुग्रहौ च पञ्चकृत्यानि । नित्यान्येतानि पञ्चकृत्यानि यदैकत्र सृष्टिः प्रवर्तते तदान्यत्र (ब्रह्माण्डान्तरे) संहारः, अन्यत्र च स्थितिरिति सम्भवात् । एकत्रैव त्रितयस्य कर्तुं शक्यत्वाच्च । यथा मृत्पिण्डेन घटो यदा निर्मीयते, तदा घटरूपेण सृष्टिः, पिण्डाकारस्य संहारः, मृद्रूपेण तु स्थितिरिति सर्वत्रैव शक्यं योजयितुम् । तिरोभावे जीवबद्धताप्राप्तिः, अनुग्रहश्च मोचनमिति । माया तु दर्शनेऽस्मिन् पाशात्मके तत्त्वे गण्यते । प्रत्यभिज्ञादर्शनेऽपि च मोहिकैव माया । परमत्र सृष्टिहेतुतयापि सा क्वचिदाख्यायते । नकुलीशपाशुपतदर्शनेऽपि प्रायेणेयमेवानुसृयते प्रक्रिया । तत्र तु भगवतः शिवस्य स्वातन्त्र्ये जीवादृष्टापेक्षापि न स्वीक्रियते, शैवदर्शने तु जीवादृष्टापेक्षमेव भगवतः स्वातन्त्र्यमिति । एवमन्योऽपि सूक्ष्मो भेद उपासनाभेदश्च तत्रैवालोच्यः । पुराणेष्वपि च सर्वविधा विभिन्नाः प्रक्रियाः तत्र तत्रालोच्येति ।

सोऽयं परतत्त्वस्य शक्तेश्च प्रपञ्चो भिन्नभिन्नशास्त्रपरिभाषाभिर्भेदेन विभिन्नानि दर्शनान्यवलम्ब्य मनाग् व्याख्यातः । इत्थं चेदं प्रतिपाद्याधिकारभेदमभिप्रेत्य प्रतिपादनप्रक्रियाभेदमात्रमित्यपि तत्र तत्र दिग्विन्यस्य प्रदर्शितम् । येऽपि च परतत्त्वस्य विष्णुशिवाद्याकाराः पुराणेषूपदर्शिताः, तेषामपि जगन्निर्मातृतत्त्वरूपेण जगद्रूपेण वा भावना तत्र तत्रोपदिश्यते । तत्र भगवतो विष्णोराकारस्य भावना प्रागेव पुराणे योगप्रकरणे विष्णुपुराणादिरीत्या प्रदर्शिता, शिवाद्याकाराणामपि चाग्रे सम्प्रारब्धे प्रदर्शयिष्यते — इति परम्परविरोधस्य न कोऽप्यवसरः ।

# समन्वयरूपा मूलतत्त्वस्य वैज्ञानिकी प्रक्रिया

अथ सर्वसमन्वयवादिनो वैज्ञानिकी पद्धतिमवलम्बमाना श्री गुरुचरणविद्यावाचस्पतिमहाभागास्तु इत्थं व्याचक्षते—अनन्तकोटिब्रह्माण्डात्मकस्य निखिलप्रपञ्चस्यैकं तन्मूलभूतं तत्त्वं रसपदाभिधेयम्—'रसो वै सः' इति श्रवणात्। रसपदञ्चानन्दबोधकं सुप्रसिद्धमित्यानन्दरूपतैव मूलतत्त्वस्यानया श्रुत्या प्रतिपाद्यते। यद्यपि मूलतत्त्वं निर्विशेषं निर्धर्मकं न केनापि शब्देनाभिलपितुं शक्यमिति सत्यम्, परं शब्दमन्तरेण बोधयितुमशक्यत्वात्कथंचित् कोऽपि शब्दः परिग्राह्य एवेत्यानन्दबोधको 'रस' शब्द एवात्र परिगृहीतः। आनन्दस्य सर्वेषामीप्सितत्वादीप्सितस्य तत्र बोधयितुं प्रयुक्तोऽयं रसशब्दः। आनन्दरूपता च तस्य मूलतत्त्वस्य निम्ननिर्दिष्टयुक्तिभिरुपपाद्या।

( १ ) मूलतत्त्वं तद् ब्रह्म सर्वं जगज्जनयति, किन्तु स्वयं न हीयते। स्वयमक्षतस्य प्रपञ्चोत्पादनं विकास एव स्यात्। विकासश्चानन्द एव सम्भवति—इति तस्यानन्दरूपतया रसत्वं सूपपादमेव।

( २ ) जगति सर्वेषां पदार्थानां परस्परमुपकार्योपकारकभावो दृश्यते। परस्परं विरुद्धत्वेन भाव्यमाना अपि पदार्थाः परस्परं साहाय्येन जगच्चक्रं परिचालयन्ति। कालविशेषे ग्रीष्मर्तुप्रभृतिषु देशविशेषे वा उद्रिक्तमग्नेर्बलं जलेनाप्यायीक्रियते। तथैव प्रवृद्धा जगत् प्लावयितुमुद्युक्ता आपोऽग्निना शोष्यन्ते। वायोरत्यर्थं प्रवृत्ता गतिं पार्थिवा पर्वताद्या न्यूनीकुर्वन्ति, पृथिव्या जाड्यापरपर्यायामभिनवपदार्थोत्पत्तिप्रतिबन्धिका

तद् भूमपदाभिधेयं विभुत्वं परमानन्द इत्यत्र कः संशयीत । भूमैव चात्मा मूलतत्त्वमिति तस्यानन्दरूपता स्फुटमनुभवसिद्धा ।

( ४ ) यत्र यावती शक्तिः, तावानेव तत्रानन्द इत्यनुभवेन श्रुत्या च सिद्धम् । पश्वाद्यपेक्षया मनुष्ये महती शक्तिरिति मनुष्यः पश्वादीन् यथेच्छमुपयुञ्जानः परममानन्दमनुभवति, घोटक परिचालने, हस्त्यारोहणे, गवादि दोहने चानन्दस्यानुभूयमानत्वात् । मनुष्येष्वपि च यत्र ज्ञानशक्तिः, प्रभुत्वशक्तिर्धनशक्तिर्वा यावत्या मात्रायामधिका, तेन तावानेवाधिक आनन्दोऽनुभूयते, तत एव हि तच्छक्तिसंग्रहणाय प्रवर्तन्ते सर्वेऽपि लोकाः । देवयोनिषु च मनुष्यापेक्षयात्यधिकाशक्तिरिति तत्राधिकमानन्दमनुमाय तद्योनिप्राप्तये यागाद्या अनुष्ठीयन्ते । तैत्तरीयोपनिषदानन्दवल्ल्यामपि चैवमेव श्राव्यते–विदुषः बलिष्ठस्य समृद्धस्य परमो मानुष आनन्दः, ततः शतशत गुणितारच गन्धर्वादीनामानन्दा इति समृद्ध्यानन्दस्य तारतम्यं तत्र श्रूयते । शान्त्यानन्दस्तु तैः सर्वैः समः सर्वाधिक इति "श्रोत्रियस्य चाकामहतस्येति" सर्वैः सह पठ्यते । तदित्थं शक्तिविशेष एवानन्दाविर्भावक इति सिद्धे सर्वशक्तिमतो मूलतत्त्वस्यानन्तानन्दरूपतायां को विवादावसरः ।

( ५ ) मृत्युर्हि दुःखस्य पराकाष्ठा । सर्वं कथञ्चित् सोढुं सज्जोऽपि सर्वः प्राणी मृत्युनाम्नैव परमुद्विजते । नास्ति सत्तोच्छेदरूपान्मृत्योरधिकमनिष्टं किमपि जगति, दुःखं चानिष्टमिति परं दुःख मृत्युः । तद्वैपरीत्येन जीवनपदाभिधेयायाः सत्ताया आनन्दरूपतोक्तप्राया । दुःखविपरीत एवार्थे आनन्द व्यवहारात्, ततश्च सर्वविरासत्तारूपस्य सर्वत्र सत्तासमर्पकस्य सर्वसत्तानिधानस्य मूलतत्त्वस्य परमानन्दरूपता कथं न सिद्धा ? एवमेव पारतन्त्र्यं नाम परं दुःखम्, शुकसारिकादीनामपि सर्व-

भोगान् परित्यजतापि पारतन्त्र्यापनयने प्रवृत्तिदर्शनात् । तथा च तद्विपरीतं स्वातन्त्र्यमानन्दरूपमिति स्फुटीभवत्येव । ततश्च द्वितीयस्य कस्याप्यभावात् पूर्णस्वतन्त्रं तन्मूलतत्त्वं कथं न स्यादानन्दरूपम् ।

( ६ ) "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" इति ब्रह्मपदव्यवहार्यस्य मूलतत्त्वस्य तटस्थलक्षणं व्याचष्टे श्रुतिः । तदेतल्लक्षणमानन्द एव घटमानं वीक्षामहे । सति स्त्रीपुंसोरानन्दे गर्भस्थितया सर्वेषां प्राणिनामुत्पत्तिदर्शनादानन्दादुत्पत्तिः सिद्धा । न च निरानन्दस्य जीवनं सम्भवति, यस्य प्राणिनो जीवने स्तोकोऽप्यानन्दो न स्यात्, तदैव स म्रियते, आनन्दलेशेनैव जीवनं धार्यते, अधिकेनानन्देन च जीवनं वर्धत इति येन जातानि जीवन्तीत्यप्यानन्द एव समन्वेति । किं च प्राणिनां सर्वेऽपि व्यापारा आनन्दप्राप्तय एव प्रवर्तन्ते, सम्पदाप्तिः, तया भोगसाधनानां सम्पादनम्, भोगः, तत आनन्द इति आनन्दावाप्तौ व्यापाराः, तत्साधनभूताः प्राणाः, इन्द्रियाणि मन इत्यादि सर्वं तत्रैवानन्दे निमज्ज्य लीनमिव भवति, तत्र पुनरपरविधस्यानन्दस्य प्राप्तये व्यापारसत्त्वेऽपि प्राप्तौ तदर्थव्यापारादीनां पुनस्तत्र लयरूपा निवृत्तिरिति स्फुटं प्रत्यहमनुभूयते, किं नाम व्यापारा एव, व्यापाराविष्टः पुरुषोऽपि तस्मिन्नानन्दे निमग्नः निश्चेष्टप्रायो भवतीति आनन्दमेव प्रयन्त्यभिसंविशन्तीत्यप्यनुभवसिद्धम्, ततश्च सर्वमूलब्रह्मलक्षणस्यानन्दे समन्वयान्मूलतत्त्वमानन्दरूपमेवेति सुस्फुटं सिद्ध्यत्येव ।

( ७ ) मूलतत्त्वमिदं सर्वस्यापि स्थावरजङ्गमात्मकस्य जगत आत्मभूतम् । 'तत्सृष्ट्वा तदेवानुप्राविशदिति' श्रुत्युक्तादनुप्रवेशविधानात् व्यापात् । जीवोऽपि तदुपहितमूलतत्त्वात्मक एवेति अन्यत्रप्रसङ्गे स्फुटीक्रियेत ।

जीवाख्यस्यात्मनश्चानन्दरूपता वेदान्तग्रन्थेषु प्रसाधिता । तत्रैवायुक्ति-रियम्—यत्प्रियत्वमानन्दस्यैव रूपं तच्छेषो वा । यत्सम्बन्धेनानन्दोऽनुभूयते, तत्रैव प्रियत्वदर्शनात्, प्रियत्वं तु सर्वोत्कृष्टमात्मन एव, आत्मसम्बन्धादेव कलत्रमित्रपुत्रादिषु गृहारामादिषु वा प्रियत्वं प्रसरति । अतएव यावत्तेषा-मात्मानुकूल्यं नामात्मानुगामित्वं तावदेव प्रियत्वं स्थितम्, किञ्चिदपि आत्मप्रातिकूल्यं यदाप्यनुभूतं चेत् तत्क्षण एव प्रियत्वं निवर्तते, द्वेषस्तत्रैवा-नुवर्तते, गृहारामादिष्वपि चात्मसम्बन्धरूपस्य स्वत्वस्यापगमे निवर्तत एव प्रियत्वम् । तदेतद् विवृतं बृहदारण्यकोपनिषदि मैत्रेयी ब्राह्मणे—

न वा अरे पत्युः कामाय पतिः प्रियो भवति,
आत्मनस्तु कामाय पतिः प्रियो भवति,
न वा अरे जायायाः कामाय जाया प्रिया भवति,
आत्मनस्तु कामाय जाया प्रिया भवति ।
इत्यादिना ।

न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति,
आत्मनस्तु कामाय सर्वं प्रियं भवति ।
इत्यन्तेन ग्रन्थेन ।

श्री विद्यारण्यस्वामिनाऽपि चानूदितं पञ्चदश्याम्—"तत्प्रेमात्मार्थमन्यत्र नत्वन्यार्थं इहात्मनि" इत्यादिना । यत्तु केचिदाक्षिपन्ति—अयमेव स्वार्थ-पराणां प्रवृत्तेरनुमानेऽपि भृत्यादिषु । वस्तुतस्तु प्रेम तादृशं यस्तु, यतोऽनेन स्त्रीमित्राद्यर्थे स्वमात्मानं बलिमिवोपहरन्तो दृश्यन्ते बहवः प्रेमपरतन्त्रिताः । समाजप्रेम, देशप्रेम, मातृभूमिप्रेम वा येषु जागर्ति, तेऽपि स्वात्मानं तृणमिव मन्यन्ते तदर्थं, क्व तत्र स्वार्थगन्धः ? तस्मात्सर्वमिदं केवलं स्वार्थपराणां वच इति । तत्रेदं प्रतिवचनम्—स्थूलमिदं पश्यति

भवन्त , न तु वैज्ञानिकी पद्धतिमवलम्ब्यानुभवस्य विश्लेषणेऽवदधति। स्त्री पुत्रमित्राद्यर्थं किं तावद्बलीक्रियते। शरीरमेव ननु। तावतापीदमेव सिद्ध्यति—यत्स्वशरीरापेक्षयापि कलत्रपुत्रादिषु आत्मानुकूल्य वैरधिक शायते। शरीरादान्तराणि इन्द्रियाणि इन्द्रियेभ्य आन्तर मन , ततोऽभ्यन्तरीभूता बुद्धि । यच्च यावदान्तरम्, तत्र तावदेव प्रियत्व प्रसरति। मनसि हि शरीरादान्तरेऽधिकतरमात्मन प्रियत्वम्। मनसश्चवृत्ति स्नेह पुत्रमित्र कलत्रादिषु । स चेच्छरीरापेक्षया तत्राधिकस्तर्हि शरीर तदर्थं त्यज्यते तस्मात्तदर्थं शरीरस्य बलीकरण मनोवृत्त्यर्थमेवेति स्पष्ट फलति। मनसो वृत्ति स्नेहातिशयो यदि न स्यात, न कोऽपि तदर्थं शरीर त्यजेन्नाम। तस्मादात्मनो यदतिसंनिकृष्ट, तदर्थं विप्रकृष्ट त्यज्यत इत्यात्मसान्निध्यादेव प्रियत्वमनेन स्थिरीभवति, न तु विपरीत किमपि। समाज देशजन्मभूम्यादावपि येषा स्वशरीरापेक्षया स्नेहातिशय, ते तदर्थं शरीर बलीकुर्वन्ति—समाजदेशादीना स्नेहरूपया मनोवृत्त्यातितरामात्मन सन्निकर्षमाप्तत्वात्। प्रकारान्तरेण वा विचार्यताम्। विभुरयमात्मा अविद्यावशादेवास्माभि शरीरमात्रे नियद्ध , तत्क्रमेण विकासोपक्रमोऽस्य प्रकृतिसिद्ध एव—यत्कुटुम्बिषु पुत्रमित्रकलत्रादिषु आत्मबुद्धि , तदनु सर्वस्मिन् कुले, ग्रामे, देशे, सर्वस्या जन्मभूम्यामन्तत "उदारचरितानान्तु वसुधैव कुटुम्बकम्" इति न्यायेन सर्वत्र ब्रह्माण्ड आत्मबुद्धिरिति। अपरिच्छिन्न हि परिच्छेदे नियमितमपरिच्छिन्नतामेव वाञ्छतीति प्रकृतिसिद्धोऽय नियम । ततश्च येषा कुटुम्बे, कुले, ग्रामे, देशे, जन्मभूम्या वात्मबुद्धि प्रसृता, ते तदर्थं स्वस्वं शरीरमात्रममृतमपेपुरित्यत्र किं चित्रम्। यस्मादस्ति सर्वत्र स्वार्थबुद्धिरेव, स्वस्य हि परिच्छेदान्निस्सार्य विस्तार प्रापितमित्येव

सूक्ष्मया दृशा दृश्यताम्। तदित्थं परमप्रेमास्पदीभूत आत्मा सर्वत प्रिय इत्यानन्दरूपता तत्र सिद्धा। जीवात्मनश्चाप्यात्मभूतं मूलतत्त्व परमानन्दरूपमित्यत्र न कोऽपि सन्देहस्तिष्ठेत्।

(८) अन्यच्च जागरे स्वप्ने च बाह्येनान्तरेण च प्रपञ्चेन तिरोहित-स्वरूप इवायमात्मा सुषुप्तौ सर्वप्रपञ्चविनिवृत्तौ स्वरूपप्रतिष्ठ इति मन्यन्ते शास्त्राणि, अनुभूयते च तथैव। संस्कारदोषतैव तत्र मुक्ताद् विशेषः। सुषुप्तिश्चेयमानन्दरूपा सर्वत्र ख्याप्यते। उत्थितस्य सुखमह-मस्वाप्समिति सौषुप्तसुखपरामर्शात्—अनुभूतस्य स्मृत्यसम्भवात्। किञ्च सुषुप्तिमिच्छन् जीवः सर्वपीडाकरपदार्थनिवृत्तये सुखकरसौरभपूर्णमृदुतम-शय्यादिसम्पादनाय च यावद्विभव सर्वोऽपि प्रवर्तते। तेन विषयानन्द-मार्गेण परमानन्दरूपायां सुषुप्तौ गन्तुमिच्छतीति सुषुप्तेरानन्दरूपता-नुमीयेतैव। सा च सुषुप्तिरात्मस्वरूपस्यैवाभिव्यञ्जके आत्मानन्द एव तत्रानुभूयते, तेनापि तदात्मभूतस्य परतत्त्वस्यानन्दरूपत्वं स्पष्टं सिद्ध्यत्येव। इत्थमनेकाभिर्युक्तिभिर्मूलतत्त्वस्यानन्दापरपर्यायरसरूपता समर्थिता। अथ प्रकारान्तरेणापि व्याख्यास्याम।



## सत्ताज्ञानानन्दनिर्वचनम्

सत्—चेतना (ज्ञानम्) आनन्द इति रूपत्रयेण ब्रह्मणो व्याप्ति ख्यापयन्ति श्रुतयः 'सत्यंज्ञानमानन्दं ब्रह्म' इत्याद्या। तत्र सत्ताया सर्व-त्रानुस्यूतत्वं सर्वैरेवाभ्युपगम्यते—अस्तीति-प्रत्ययस्य सर्वत्रैव जागरूकतया सर्वस्यापि पदार्थजातस्य सद्रूपतयानुभवात्। यत्रापि किञ्चिन्नप्रतीयते

भूता वा विषयता ज्ञान-विषययो सम्बन्ध , अस्वरूपे च स्वरूपसम्बन्ध कथ स्यादिति विषयस्य ज्ञानस्वरूपता तैरप्यभिव्यज्यते ।

यत्तु विव्रियते—केवलज्ञानस्वरूपत्वे घटपटयो समूहालम्बनज्ञाने घटगता पटगता च विषयता एकैव स्यात् । ज्ञानस्यैकत्वादिति । तथा च घटत्वावच्छिन्नपटत्वावच्छिन्नविषयतयोरैक्यापत्ति । केवलविषयस्वरूपत्वे तु स घट इति ज्ञाने सत्तांश-परित्यागेन घट इति ज्ञाने च विषयो घट एक एवेति विषयताप्येकैव प्रसक्ता, तथा च तद्घटज्ञानीयविषयताया घटज्ञानीयविषयतायाश्चैक्य प्रसवनम् । एव नीलो घट इति ज्ञानेऽपि नीलगुणाश्रयस्य घटत्वजात्याश्रयस्य च विषयस्यैकत्वान्नीलविषयता घटविषयता चैका प्रसज्येत । तस्माद् ज्ञानविषयोभयरूपत्व विषयताया अभ्युपगन्तव्यम् । विषयतात्वमुभयवृत्तीति यावत् । तदेतद् वागाडम्बरमात्रम् । ज्ञान विषययोरुभयो समिलितयो पदार्थान्तरत्वाभावन उभयरूपतायामपि ज्ञानरूपता, विषयरूपताचेत्युभयमपि सिद्धमिति द्विविधस्यापि दोषस्य पुनरपि प्रसक्ति । द्वित्वादिवदुभयत्रैवपर्याप्तोति विषयता नैकैकस्मिन्नित्यपि न शक्यते वक्तुम् । एको न द्वावितिवद् घटज्ञानस्य घटो न विषय इति व्यवहारापत्ते । समाधीयता वा यथाकथञ्चित् । उभयस्य मिलितस्य विषयतारूपत्वे तस्याश्च स्वरूपसम्बन्धत्वे मिलितत्व स्वरूप सिद्धमेवति विषयस्य पार्थक्य वाङ्मात्रमेव । तस्माद्विषयो ज्ञानरूपमेवेति भङ्ग्या प्रतिपादित भवति । विषयस्य ज्ञानात्पार्थक्ये तत्सम्बन्धो नोपपद्यते इति च सुस्पष्ट भवति । ततश्च सर्वस्यापि ज्ञानविषयत्वेन ज्ञानरूपत्वाद्—ज्ञानस्य व्यापकत्व सुस्पष्टम् । प्रकाशरूपाञ्च इद मुख्य ज्ञानम् । तच्च विषयेष्वनुस्यूतमित्यग्रे प्रतिपादयिष्याम । तदित्य ज्ञानस्यापि सर्वपदार्थव्याप्तिरुपपादिता ।

एवमानन्दोऽपि सर्वत्रानुस्यूतः। प्रियता हि नामानन्दस्य रूपम्, इति प्रागुपपादितम्। प्रियता चेयं सर्वत्रैवानुस्यूता। देशकालपात्रविशेषसम्बन्धेन प्रियतायाः सर्वत्रैवान्वयात्। उष्णं वस्तु ग्रीष्मे प्रियत्वाभावेऽपि शीतकाले प्रियं भवति। शीतप्रधाने च देशे सर्वदैव तत् प्रियं भवति। अस्माकमप्रियमपि च व्यक्त्यन्तरस्य प्रियं भवति। मनुष्यमात्रस्याप्रियमपि कण्टकादि क्रमेलकादीनां प्रियं भवति। मनुष्यमात्रस्यात्यन्तदुर्गन्धकमपि च पूयमलादि सन्निहितानां कृमीणां शूकरप्रभृतीनां चात्यन्तं प्रियं भवतीत्येवं विचार्यमाणे नास्त्येव तद्वस्तु, यत्कस्यापि प्रियं न स्यात्। ततश्च प्रियतायाः सर्वत्रान्वयित्वे आनन्दस्यापि सर्वत्रानुगतिः सिद्धैव। वस्तुतस्तु आनन्दविषयता आनन्दजनकता वा देशकालपात्रभेदेन कथञ्चित्सर्वत्र सिद्धा, आनन्दाधिकरणता तु न सर्वत्र वक्तुं शक्या, तस्याः केवलमात्मन्येव सत्त्वात्। जडेषु आनन्दानुभवाभावादिति चेदनुपदं ज्ञानप्रकरणोक्तरीत्या विषयता नाम नातिरिच्यते स्वरूपात्। यो ह्यानन्दस्वरूपानुप्रविष्टो न स्यात्, तस्यानन्दविषयतापि नैव सम्भवेत्। स्वरूपसम्बन्धविशेष एव विषयतेति दार्शनिकैरप्यनुमतत्वात्। ननु ते ते पदार्था आनन्दजनका, न तु आनन्दविषया इति चेद् आनन्दस्य वेदान्ते नित्यतायाः स्वीकृतत्वेन तज्जनकता दूरापास्तैव। सर्वत्र व्याप्त एवानन्द आवरणभङ्गेन प्रतीयत इति व्याख्यास्यमग्रे। तदित्थं सत्ताज्ञानानन्दानां सर्वत्रानुगतत्वे सिद्धे यदनुगतं तत्कारणम्, यत्त्वननुगतं तत्कार्यम्। अनुगतं सुवर्णं स्वानुगम्यानां कटककुण्डलकेयूरादीनां कारणम्, अनुगता मृच्च स्वानुगम्यानां घटकुड्यशरावादीनां कारणमिति नियमस्य सर्वत्र दर्शनेन सर्वत्रानुगतानां सत्ताज्ञानानन्दानां सर्वकारणत्वरूपमात्मत्वमपि सिद्धमिति वेदान्तिनां प्रक्रिया। ते चामी

सत्ताज्ञानानन्दा कयाचिद् दृष्ट्या परस्पर भिद्यन्ते। सत्ता ज्ञानबोध्या, ज्ञानन्तु बोधकम्, आनन्दस्तु ताभ्यां पृथगेव। सुखापरपर्याय इति पृथग्-पृथगनुभवात। पौर्वापर्येणाप्येतानि भिद्यन्ते। सत्ता हि द्रव्यगुणकर्मस्वनुस्यूतामेका नित्यां तार्किका आतिष्ठन्ते। दर्शनान्तराणि तु तादृशपदार्थान्तरस्वीकरणमप्रामाणिकं मन्यमानानि अर्थक्रियाकारितामेव सत्तामभ्युपगच्छन्ति, तदीयया क्रियाया जनकीभूता तत्पूर्वावस्थारूपा शक्तिनाद्राभिधेया सत्ता सिद्ध्यति। यस्मिन् यस्मिन् पदार्थे यावत्कार्यकरणसामर्थ्यम्, तत्सर्वमेव बुद्ध्या गृह्यमाणं तस्य पदार्थस्य सत्तेति सर्वलिना शक्तय एव सत्ता भिववतु शक्यते। बलपराक्रमादीनि च तद्रूपाण्येव। ज्ञानन्तु तत्पश्चात्कालिकस्तदनुभव। पूर्वं किञ्चित् कार्यं दृष्ट्वा तस्य तस्य पदार्थस्य सत्त्व ज्ञायत इति। ज्ञानानन्तरं च तस्य तस्य पदार्थस्यानुकूलत्व प्रतिभासने, ततो मनो विकासो नामानन्द उदेतीति पूर्वापरीभावात्पृथक्त्वमेव तेषां स्वीकर्तव्यं भवति। किंच विभिन्नत्वेन विचारविषयतामापद्यमानेष्वपि वस्तुषु सत्ता एका अपृथग्भूतैव व्यवह्रियते, यथा एक एवोष्णीषोऽस्मदग्रे तिष्ठति—तत्र विचारेण अनेकैरल्पैर्वसनखण्डैरयं निर्मित इति तानि वसनखण्डान्यपि समवायिकारणरूपाणि तत्रानुप्रविष्टानि प्रतीयन्ते, तानि च वसनखण्डानि तन्तुनिर्मितानीति तन्तवोऽपि उपादानतया तत्रानुप्रविष्टा स्वीकार्या एव, ते तन्तवश्च तूलादुत्पन्ना इति तूलस्य तत्रानुगतत्व क प्रतिषेधेत, तूलेष्वनुगतं कार्पास तत्राप्यनुगतां मृद को नाभ्युपगच्छेत्। तदेव पृथक् पृथक् पदार्थविषयकाणि पृथक् पृथक् ज्ञानानि तत्र जाग्रति। किन्तु एकमिदमुष्णीषमस्तीति तस्य सत्तामेकामेव सर्वोऽपि व्यवहरन्ति। एवं च प्रावरणरूपा क्रिया तेन क्रियत इति सत्तायां नास्तिभेद, तेन सत्ता

एका, ज्ञानत्वनैकमेवत्रेति संख्याभेदस्तयोः सिद्धः । बहूनान्तु पृथक्-पृथग्वयवानां हस्तपादसास्नालाङ्गूलस्तनादीनां समूहः एका गौः । अर्थक्रियाकारित्वं अपि च पृथक् पृथगवयवेष्वप्यस्ति, चालनस्पानावरोध प्रतीघातादीनां पृथगवयवेष्वपि दर्शनात् । केशादीनां चापि पृथगवयवैरत्वाघमानत्वात्, तदित्थं सत्ताभेदेपि गौरित्येकएव प्रत्ययस्तत्र भवतीति संख्या भेदः स्पष्टः । एवं कार्यभेदोपि प्रतीयते । सन्ति केचन पदार्था अस्ति (सत्ता) सिद्धा, केचिद्भाति ( ज्ञान ) सिद्धाः, केचित्तूभयसिद्धा इति । वेदान्तिभिर्व्याख्यायमान आत्मा ब्रह्मरूपः केवलमस्तिसिद्धः, "अस्तीत्येवोपलब्धव्यः" इति सत्तामेव श्रावयति श्रुतिः, न तु केनापि तत् ज्ञातुं शक्यते—

"विज्ञातारं का अरे केन विजानीयात्"

इति तस्य ज्ञानं विषमतायाः सयुक्ति प्रतिषेधात् । गिरिगुहादिषु निगूढाश्च लताद्या ये न केनापि ज्ञायन्ते, अनन्तरं कार्याणि तेषां दृश्यन्ते , ते केवलमस्ति सिद्धाः , सर्वत्र निगूढमनुप्रविष्टा प्रकाशशक्तिर्न केनापि ज्ञायते, कार्यन्तु प्रकाशादिकं तस्या आलोक्यते इति स्वसत्ताकाले केवलमस्तिसिद्धा इमे पदार्था अतिक्रान्तसत्ता. पश्चादनुमीयन्ते । द्वित्वत्रित्वाद्या संख्या दीर्घलघुत्वादि परस्परापेक्षं परिमाणम्, देशकालाद्या , सामान्या विशेषाश्च सर्वेषां प्रतीतिसिद्धा अपि न सत्तां दधति, अर्थक्रियाकारितायास्तेष्वदर्शनात्-पार्थक्येनाप्रतीतेश्च । तार्किकास्तु यत्तेषां सत्तासाधनायापि प्रयतन्ते सोऽयमपदार्थकल्पनाप्रयासस्तेषां जलताडनादिवदुपहासप्रयोजक एवेत्यास्तां तावत् । घटपटाद्याः पदार्थास्तूभयसिद्धा, ते हि किञ्चित् कुर्वन्ति, ज्ञायन्ते चेति । इत्थं सत्ताज्ञानयोर्भेदः सिध्यति । ज्ञातायामपि सत्तायां क्वचिदानन्दो भवति,

क्वचिच्च न भवतीति आनन्दस्यापि भेद सिद्धयत्येव। प्रकारान्तरेण तु दृष्टिभेदे सर्वेषामेषामभेद एव सिद्धयति। ज्ञानविषयो हि ज्ञानात् पृथक् न भवतीति प्राक् प्रत्यपीपदाम, ज्ञानविषयश्च सर्वत्र सत्तैव। तत्कथ सा ज्ञानात् पृथक् स्यात्। क्षचितरेव सत्तेति सत्यभ्युपगमे ज्ञानमप्येवा क्षचित्‌रिति तस्य सत्तान्तर्भाव कथ नेष्येत ? व्यवहारेपिनास्तिविशेष तेनानेकधा बहुधा वा व्यवहारे सत्ताया अपि बहुत्वमेकत्व वा प्रतिपद्येतैव। उष्णोपे विचार्यमाणे यान्यनेकानि ज्ञानान्यास्थितानि, तानि वस्त्रतन्तु तूलादीना सत्तामेव गोचरयन्ति इति ज्ञानभेदे विषयभूताया सत्ताया कथं न भेद सिद्धयेत्। गौरित्येकमेव ज्ञानमिति सत्यम्, पर विभिन्नानामवयवानामपि पृथक्-पृथक् ज्ञानमस्त्येवेति कुत सत्ताभेद। यत्तु केचित्पदार्था केवलमस्तिसिद्धा केचिच्च केवलभातिसिद्धा इत्युपपादितम् तत्र स्वयमस्तिर्भातिसिद्ध एव, सामान्यस्य भवद्भिर्भातिसिद्धत्वाभ्युपगमात्। सत्तायाश्च सामान्यरूपत्वात्। भातिपदवाच्य ज्ञान च स्वय सत्तासिद्धम्। तस्यैव सर्वव्यवहारकारणत्वात्, ततश्च स्वयमस्तिर्यदा भातिसिद्ध, स्वय भातिश्चास्ति सिद्ध, तर्हि सत्ताख्याम्युभयसिद्धत्वेवेति कुत इमे सत्ता ज्ञानेऽभिधेयाताम्। पूर्वपश्चाद्भाव आश्रयाश्रयिभावश्च सर्वोपि व्यवहारकल्पितो न मौलिक भेदमावातुमलम्। तस्मात्सूक्ष्मदृष्ट्या विचारे सत्ता ज्ञान वा न परस्पर भिद्येते, यत् सत् तदेव ज्ञायते यच्च ज्ञायते तदेव सदिति सत्ताज्ञानयो परस्पर साध्यसाधनभावव्यवहारेणान्तत एकत्व एव पर्यवसानम्। एवमानन्दोऽपि नाम्ना भिद्यते। आनन्दोप्यनुभूयते, अनुभवविषयश्च नानुभवात् पृथगित्यसकृदुक्तमित्यनुभवापरपर्यायज्ञानरूप एवानन्द। अस्तित्वेन चानन्द प्रतीयते नाभावत्वेनेति सत्ताया अपि स न

पृथक्। अस्त्यस्माकं संपदिति सपदः सत्ता वयमनुभवाम। तेनानुभवेनैव चानन्दमनुभवाम इति वस्तुसत्तैवानन्दः, तदनुभव एव वा आनन्दः, अविज्ञाताया सपदः सत्तायामानन्दाननुभवादिति त्रयस्याभेद एव सिद्ध्यति। पूर्वापरीभावोऽप्येषामनियत, पूर्वमुत्पन्नो गृहीतसत्ताको घटः ज्ञानविषयतामेति, ततस्तदर्थिनामानन्दः। निर्मातुर्ज्ञानविषयता पूर्वमेवापन्नो घटस्तेनोत्पादितः सत्ता गृह्णाति, नह्यजानन् कश्चित् कञ्चित्पदार्थमुत्पादयति "विनायकं प्रकुर्वाणो रचयामास वानरम्" इति न्यायापत्तेः। ततश्च पूर्वं ज्ञानम्, ततः सत्ता, तत आनन्द इत्यपि क्रम। स्त्री पुंसयोरानन्दादेव तु बालस्योत्पत्तिर्जायते, ततस्तज्ज्ञानमित्यानन्दपूर्वोऽपि दृश्यते क्रम। सत्ता नाम जीवनम्, न च हर्षापरपर्यायस्यानन्दस्य लेशेनापि विनाकृत जीवन सभवतीति उक्तपूर्वम्। बुभुक्षितस्यान्नादि ग्रहणेन तृप्तिर्जायते। सेयं तृप्तिरानन्द एव, तत सत्तारूप जीवनमिति रसस्य सत्ताजनकता स्फुटमनुभूयते। अनुभवविशेष एवानन्दः, विषयता सम्बन्धेनानुभवे प्रविष्ट आनन्दोऽपि सन्निति सत्ताविशेष एव, सति सत्त्व एवानुभव इति नाप्रकृष्ट शक्यतेऽनुभव सत्ताया, ज्ञानमन्तरेण न सिद्ध्यति सत्तेति अन्योन्यजनका अन्योन्यमिथुना अन्योन्याविनाभूताश्चेते न कथमपि पार्थक्येन निर्वक्तु शक्यन्ते। तस्मात्त्रयस्यैक समुद्य भेदप्रतिभासरहित रूपमात्मा, विशकलितानि च रूपाणि परस्पराविनाभावेन स्थितानि त्रीणीत्येष सार। किं च लोके सत्ता ज्ञान वा नावलम्बमन्तरेण क्वापि दृष्टम्, कस्य सत्ता, कस्य वा ज्ञानमिति जायत एव श्रोतुराकाङ्क्षा, तदनयोरवलम्ब। कश्चित्कल्प्य एव, तत्सर्वावलम्ब भूतो भूमा रस एवावलम्ब इत्येव वक्तव्य स्यात्। वस्तुतस्तु रसोऽयं सत्ता ज्ञानयोरप्यनुस्यूतः,

ततोह्यस्माकं सत्तापि सदा प्रिया, सर्वार्थसंग्रहे सततं प्राणिनं प्रवृत्तिदर्शनात्। ज्ञानमपि च सदा प्रियम्, अपरिज्ञातं ज्ञातुं सदैव प्रयत्नदर्शनात्।

अर्थं प्रियो नोऽस्ति सदार्थलिप्सा,
ज्ञानं प्रियं नोऽस्ति सदा बुभुत्सा।

इति हि मशयोच्छेदवादे प्रतिपादितम्। अर्थसत्ता स्वकीयामविदन्च जनो दुःख याति, बुभुत्सायामबोधे चापि दुःख याति। दुःखविरोधी चानन्द इति सत्तायां ज्ञाने चानन्दान्वय स्पष्टमनुभवसिद्ध.। किं चारण्य सग्रामादौ नास्ति मे कश्चित्सहाय इति सहायक सत्तामविदन् जनो भय याति। सत्यपि सहायके यदि तस्य ज्ञान नास्ति, तदापि भय याति असत्यपि तु सहायके यदि कश्चित्तदवष्टम्य सन्ति बहवस्ते सहाया इति बोधयेत्—तदा तस्य भय निवर्तते। भयमिद दुःखम् निर्भयता च सुखमिति सत्ताया ज्ञानस्य च निर्भयता प्रयोजकत्वेनाप्यानन्दान्वयस्तत्र स्फुटीभवति। ततश्च यत्र यदनुस्यूत तस्य तत्कारणमिति पूर्वोक्तेन न्यायेन प्रियताप्रयोजक आनन्दापरपर्यायो रस सत्ताज्ञानयोरपि कारणमिति मुख्यमातस्व तस्य सम्यगेव व्याख्यायते। एव स्वस्य स्वीयस्य वस्तुनो वा सत्ता विदन् जनो हर्षं याति, तत्र सत्ता ज्ञाने समाविश्य लीना भवति, न तत्र पृथक् विद्यते। ज्ञान चानन्दे समाविश्य लीन भवति आनन्दमात्र तु अन्ते परिशिष्यते। तस्मात्तस्य यत्राप्यय, तस्य तत्कारणमित्यपि रसस्य सत्ताज्ञानयो कारणता सिद्धा भवति।

इदन्तु स्मर्तव्यम्—सर्वांशान्वितत्वेन य इमे सत्ताज्ञानानन्दा आत्मरूपतया व्याख्याता, त इमे लौकिकसत्ताज्ञानानन्देभ्यो विलक्षणा एव। लोके हि सत्ता नाम सामान्यं निर्विशेष न क्वापि दृष्टम्, न निर्विशेषं

सामान्यं न च सामान्याविनाभूतो विशेष इति लौकिकानामनुभवात् । आश्रयनिष्ठैव लोके सत्ता गृह्यते, विशेषभूता द्रव्यादय एवास्या आश्रया इति यावत् । इयन्तु मूलतत्त्वरूपतया व्याख्यायमाना सत्ता निर्विशेषैव, विशेषस्य तस्यामवस्थायामनुदयात् । लोके हि निराश्रया सत्ता न क्वापि दृश्यते, इयन्तु निराश्रयैवेति । तस्माल्लोकविलक्षणा अलौकिकीयं सत्ता । ज्ञानमपि च लोके विषयप्रकाशलक्षणं निर्विषयं न क्वापि दृष्टम् । न च कर्तृभूताश्रयमन्तरेण, अहमिदं जानामीत्याश्रयविषयसहकृतस्यैव तस्य-मानात् । इदन्तु मूलतया व्याख्यमानं निर्विषयमेव, विषयस्य प्रकाश्यस्य स्वभिन्नस्य तदानीमभावात् । न च तदानीं तस्याश्रयोऽपि कश्चिदन्योऽस्ति । लोके हि सविकल्पकमेव ज्ञानं ज्ञानतया परिचिन्वन्ति लोकाः, इदन्तु निर्विकल्पकमिति यावत् । निर्विकल्पकमपि केवलं प्रकारता विशेष्यतानु-भवशून्यं यादृशं तार्किका अभ्युपगच्छन्ति, नेदं तादृशम्–तस्य सविषयक-त्वात्–अस्य च सर्वथा विषयस्पर्शशून्यत्वादितीदमप्यलौकिकम् । एवमा-नन्दोऽपि । अन्तःकरणावच्छिन्नचैतन्यविकासरूपः समुद्भूतानन्द एव लौकिकैरानन्दनाम्ना परिचीयते, अयं तु न तादृशः, किन्तु शान्तापरपर्यायः शान्तिरूपः, अखण्डस्य स्वगतभेदशून्यस्य मूलतत्त्वस्य विकासासंभवात् । शान्त्यानन्दः समुद्भूतानन्द इति द्विविध आनन्दः । समुद्भूतानन्दो लौकिकः, अयं मूलतत्त्वरूपस्तु शान्त्यानन्द इत्ययमप्यलौकिक एव । समुद्भूतानन्द-सविकल्पज्ञानसविशेषसामान्यरूपास्त्रयस्ता लोके प्रसिद्धा व्यक्ता इति आख्यायन्ते, प्रकटास्ते इति यावत् । मूलतत्त्वरूपास्तु शान्त्यानन्द-निर्विकल्पज्ञाननिर्विशेषसामान्यरूपा गूढा, निगूढा इति यावत् । न चासतो निगूढत्वं प्रकटत्वं वा दूरे, सत्ताज्ञानानन्दरूपा एव तु नानोप-

पद्यन्ते–सतो भावो हि सत्तेति निर्बुवन्ति वैयाकरणा, भावो नाम धर्म, सति कस्मिंश्चिदाश्रये तत्र स्थितस्यैव सद्भावत्वात् सत्तापदव्यवहार्यत्वं स्यात् न तु निराश्रयस्य। ज्ञानमप्यवबोधरूप बोध्य विना निर्विषय कथ ज्ञानपदेन व्यवहार्यम्। निर्निष्ठश्चावबोध इति निराश्रयमपि न ज्ञानशब्दो भजति। एवमानन्दशब्देपि नदिधातु 'टुनदि समृद्धौ' इति श्रीपाणिनिना निरुक्त समृद्धयभावे कथ प्रसरेत्। तस्मान्नैते शब्दास्तत्र युज्यन्त इति चेत्, सत्यमिदम्। न तत्र कोऽपि शब्दो युज्यते इति प्रागेवावोचाम। न तु शब्दप्रयोगमन्तरेण निरूपणादि कोऽपि व्यवहार सभवतीति कथचित् कांश्चिच्छब्दान् प्रयुञ्ज्महे। एवमौपचारिके शब्दप्रयोगे लोके य सत्ताज्ञानानन्द-पदाभिधेया अर्था, तन्मूलभूत तल्लक्षणक सर्वादिभूत-मूलतत्त्वमिदानीं, प्रत्यभिज्ञायत इति ते शब्दास्तत्र प्रयुज्यन्ते। सृष्टे पूर्व न तत्र किमपि लक्षण शक्य वक्तुम्, निर्धर्मकत्वात्, इदानीन्तु सृष्ट्या परिचिता वय यानि लक्षणानि तत्र तत्र पश्याम, तान्येव द्वारीकृत्य मूलतत्त्वस्यानुसन्धान कुर्वाणास्तथैव व्याचक्ष्महे–नास्त्यन्य उपाय इति। तानि च लक्षणानि तदा निगूढानि, सृष्टौ तु प्रकाश गतानीत्यस्माकमभिप्राय।

तत्र सूक्ष्मदृष्ट्या विचारे क्रियमाणे निगूढान्येव मुख्यानि, प्रकटीभूतानि शुक्लपदाभिधेयानि तु योगजानीति स्पष्ट प्रतिभासेत।

तथा हि–सत्तैव प्रथम परीक्ष्यताम्। सत्ता नाम सामान्यम्। एव भूमा इति श्रुतिषु व्याख्यते। स्वगतेन केनचित् विशेषेण चिह्नादिना पृथक्कृत्य ज्ञायमाना घटव्यक्ति यदा त विशेषमपह्नुत्य ज्ञायते–तदा घटसामान्ये सा प्रविशति, विशेषरूप तद्व्यक्तित्व तदा न भासते, घटसामान्यमेव प्रतीयत इति तद्विषयिणी बुद्धिर्विस्तर गता। तदुक्त चरकमहर्षिणा—

सर्वदा सर्वभावानां सामान्यं वृद्धिकारणम्,

ह्रासहेतुर्विशेषश्च, इति

तदनु घटत्वधर्मोऽपि मृत्सामान्यापेक्षया विशेषरूपं व्यक्तिभूतं गौणीकृत्य शरावकुड्यादि-सामान्येन यदा विभाव्यते तदा मृत्सामान्यं प्रतीयत इति पुनर्विस्तृता बुद्धिः। मृदमपि व्यक्तित्वेन परिकल्प्य प्रस्तरकाष्ठादि साधारण्येन दर्शने पृथिवीसामान्ये मृदादिकं सर्वं प्रविष्टम्। एवं पृथिवी द्रव्यसामान्ये प्रवेशिता, द्रव्यमपि च क्रमेण पदार्थापरपर्यायसत्सामान्ये प्रवेशितं केवलं सद्रूपमेव भासते, तदेवान्तिमं निर्विशेषं सामान्यं सत्ता नाम, नैतः परं सामान्यं किञ्चिदस्ति, सदतिरिक्तस्यासत्त्वादवाच्यत्वात्, सतस्तत्र तिरोभावे च सर्वासत्त्वप्रसङ्गात्। अतएव श्रुत्यापि विलयासम्भवादिदं नित्यमपरिच्छिन्नं च श्रुत्या 'भूमा' ( सर्वापेक्षया बहुत्वम् ) इति पदेन व्यपदिष्टम्। अपरिच्छिन्नस्य विनाशिताया क्वाप्यदर्शनात्, विनाशहेतोश्च सम्भावनाभावात्। अस्यैवापरिच्छिन्नस्य सामान्यस्य—

'नघटाभावसामान्य नित्यत्वाद्' (न्या० सू० २।२।१४)।

इत्यादौ नित्यत्वं भगवता गौतमेनोक्तम्।

इदमेव च भगवता कणादेन वैशेषिकदर्शनेऽप्युक्तम्—

'सामान्यं विशेष इति बुद्ध्यपेक्षम्'

इति विभिन्नत्वेन ज्ञानमपह्नुत्य समानतया बुद्धिप्रसारे सामान्यं भवति, सामान्ये कञ्चिद्धर्मादिकं विशेषं परिकल्प्यते पृथक्त्वबुद्धौ स विशेष एव मुख्यतया भासते इति बुद्धिरेव सामान्यरूपेण विशेषरूपेण वा तं तमर्थं बोधयतीति सूत्रतात्पर्यम्। नवीना नैयायिकास्तु द्रव्यादेभ्यः पृथग्भूतं तद्वृत्ति च सामान्यं विशेषं च पदार्थान्तरं परिकल्प्य तस्यानन्तविधता

व्याचक्षाणा केवल बालाना बुद्ध्युपरोहाय प्रयतन्ते। दर्शनान्तरेषु बौद्धादिभिर्भर्त्स्यन्ते चेत्यास्ता तावत।

एव जगति पदार्थेषु बुद्धिप्रसरेण सामान्यविशेषरूपता प्रदर्शिता। अयमेव तु मूलतत्त्वादुत्पत्ते प्रलयस्य च क्रम ।

निर्विशेषमपरिच्छिन्न सामान्य मुख्य मूलम्। सति तु परिच्छेदे विशेषा उत्पद्यन्ते। परिच्छेदश्चाय मायाकृत इत्यनुपद वैज्ञानिकप्रक्रियया शक्तिनिरूपणे व्याख्यास्यते। परिच्छेद एव विशेष इति व्यक्तिरिति वा व्यवहारविषयता गच्छति। सामान्यमेव हि मायाकृतेन परिच्छेदेन विशेषता गच्छतीति सामान्यादेव विशेषा सर्वे प्रादुर्भवन्ति निष्क्रामन्तीति यावत। सति च विशेषप्रादुर्भावे तत्रानुगतस्य सामान्यस्य तस्य विशेषस्य चाश्रयाश्रयिभावतो व्यवहार प्रकल्प्यते लोके। अनुस्यूत सामान्यमाश्रितमिति, विशेषश्चाश्रयभूत। तत्र सामान्यस्योपलम्भात। मृत्सुवर्णादि सामान्य घटकटकादिष्वेवोपलभ्यत इति दर्शनात। तदिदमुक्तमात्मन आकाश सम्भूत इति श्रुतेस्तात्पर्य प्रकटतया श्री विद्यारण्यस्वामिना पञ्चदश्याम्—

सतो व्योमत्वमापन्न व्योम्न सत्ता तु लौकिका।
तार्किकाश्चावगच्छन्ति मायाया उचित हि तत्॥
( पञ्चदशी २–६४ )

सद्रूपमतिम सामान्य मायया व्योमरूपविशेषता गतम। लौकिकास्तार्किकाश्च व्यत्ययेन सत्ताया आश्रितत्व व्योम्नश्चाश्रयत्व माययैव व्यामोहिता मन्यन्त इति। विशेषप्रादुर्भावे तदनुवृत्तिता गतस्य धर्मधर्मिभावापन्नस्य सत एव विशेषेण वाचकेन सत्ताशब्देन व्यवहार प्रवर्तते। स

समानेषु बहुषु वर्तत इति सामान्यपदव्यवहारश्च । मूलतत्त्वे तु धर्मधर्मि-भावासम्भवान्नैते शब्दा उपयुज्यन्ते परन्तु प्रवर्तमानैरेव शब्दैर्व्यवहार-निर्वाहाय मूलतत्त्वमपि व्याप्यत इति भूयोभूयोऽनुसन्धेयम् । सत्पदमपि तत्र न लौकिकया प्रक्रियया सत्ताश्रयत्वेन तत्र धर्मधर्मिभावाभावस्योक्त-त्वान् नाप्यर्थक्रियाकारित्वेन, अर्थक्रियादेरदर्शनमानस्य तदानीमभावात्-अपि तु अलौकिकभूतासद्व्यावृत्तिमेव बोधयितुं सत्पदं तत्र प्रयुज्यते श्रुत्यादिभिः । परस्तादुत्पन्ना विशेषसहकृता सामान्यविशेषरूपा सत्ताभेदा अनित्या एव भवन्ति । परिच्छिन्नस्य नित्यत्वासम्भवात् । 'अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम्' इति श्रुत्या निर्दिष्टोऽतिमो विशेषणोऽणिमानाम्, सोऽपि नित्य, न च स भूम्नातिरिच्यते अपरिच्छिन्नत्वात् बुद्ध्या ग्रहीतुमशक्यत्वाच्च । यथा हि परममहत्त्वं न परिच्छेत्तुं, तथातिममणुत्वमपि न परिच्छेत्तुं शक्यते । परिच्छेदो हि नाम दिक्कालसम्बन्ध, न चाणिम्नो दिक्सम्बन्ध सम्भवति निरो दनभो कथ्यमानतया दिक्सम्बन्धस्य दशावयवत्वापत्तेरिति स्पष्टं शारीर-कभाष्यपरमाणुवादखण्डनप्रकरणे । अतएव न स्वबुद्ध्या ग्रहीतुं शक्यते बुद्धे परिच्छिन्नस्यैव ग्रहणसामर्थ्यादिति । यत्तु वैशेषिकैः परिच्छिन्नोऽपि परमाणुर्नित्यतयाभ्युपगत, न तदभ्युपगमो वेदान्तभाष्यादिषु सपरिकरं निराकृत गहन परिच्छिन्ने तत्त्वान्वेषणे प्रवर्तयितुं प्रथमभूमिकारूप एव न मन्तव्य । तस्मादेष एवाणोरणीयान्, महतश्च महीयानिति । अणुत्वमेव तत्र भूमत्वमणिमत्व वा इदं मन्यते । तदिदं पुस्तके लौकिको गता मायायाश्च व्याख्याना ।

गतिसम्बन्धे ज्ञानं तु स्फुटमेव विज्ञानगम्यम् । 'पटोऽयम्' 'घटोऽयम्' इति व्यवह्रियमाणे ज्ञानस्वरूपे, ज्ञायते-घटपटादि प्रकाश्य क्रिया

एकोऽशः, तत्प्रकाशस्त्वपरः, तत्र घटपटाद्या विषया इमे सततं भिद्यन्ते, प्रकाशांशस्तु न कदापि भिद्यते। सर्वेषां विषयाणां प्रकाशस्यैकरूपत्वात्। तस्य भेदकाभावात्। अनुमितिशब्दादिषु निरूप्यमाणेषु ज्ञानभेदेष्वपि प्रक्रियैव भिद्यते न प्रकाशः। कदाचिदिन्द्रियसम्बन्धात्प्रकाशः प्रादुर्भवति, कदाचिच्च लिङ्गपरामर्शात्, कदाचिच्छब्दश्रवणेन गृहीतसम्बन्धस्य पदार्थस्य स्मरणाद्वेति प्रक्रियाभेदमात्रम्। सोऽयं प्रकाशो न कदापि विपर्येति, न वा तिरोधत्ते इति नित्य एव। सुषुप्तिमूर्छादिष्वपि विषयं सहेन्द्रियाद्यसम्बन्धाद्विषया न प्रतिभासन्ते, प्रकाशस्त्वस्त्येव। तत एवोत्थितस्य 'अहं न किञ्चिदवेदिषम्' 'अहं सुप्त आसम्' 'अहं मूर्छित आसम्' इति स्वात्मसत्तापरामर्शो दृश्यत एव। यदिहि सुषुप्तिमूर्छादिषु प्रकाशो नाभविष्यत्, कथं तर्हि उत्थितस्य परामर्शरूपं स्मरणम्। अप्रकाशितपूर्वे स्मरणस्यादर्शनात्। कथं चोत्थितस्य सामिकृतकार्यपूरणाय प्रवृत्तिः। मध्ये प्रकाशविच्छेदे तस्य प्रकाशस्य विनाशाभ्युपगमे नवोदयन्नस्य प्रकाशस्य पूर्वकृतस्मरणासम्भवात्—इति नित्यत्वमेव। इदमेव नित्यज्ञानमात्मत्वेन मूलतत्त्वरूपतया व्याख्यातं मुख्यम्। विषयास्तु परस्तादुत्पन्नास्तत्र निविशन्ते चापयान्ति चेति युक्तं सविषयकं ज्ञानं योगजमनित्यं चानुसन्धेयम्। ननु प्रकाश्याभावे कस्याय प्रकाशोऽभ्युपगम्यताम्? अप्रकाशकस्य च ज्ञानशब्देन कथं व्यवहारः? प्रमाणाधीनञ्च ज्ञानमिति सर्वत्र दृश्यते, प्रमाणं जनकं ज्ञानन्तु तज्जन्यमिति अजन्ये कथं ज्ञानव्यवहारः? इति चेत्—न प्रकाशः स्वरूपसत्तायां प्रकाश्यमपेक्षते, प्रकाश्यस्याभावेऽपि सविता प्रकाशते, प्रदीपः प्रकाशते इति समवानः। यावन्ति प्रकाश्यानि स्वसम्बद्धानि, तानि सविता दीपो वा प्रकाशयति।

अनेकानि यदि प्रकाश्यानि सन्निहितानि तदाऽनेकानि प्रकाशयति, एकमेव यदि सन्निहितं तदैकमेव प्रकाशयति, न तु तावता प्रकाशस्य स्वरूपसत्ता वर्धते हीयते वा, तथैव यदि प्रकाश्यान्तरं नास्ति, तदा किमप्यन्यद-प्रकाशयन्नपि प्रकाशः स्वरूपं प्रकाशयति इति युज्यते। यं प्रति स्वरूपं प्रकाशयेत्, सोऽप्यन्यः कश्चिन्नास्तीति चेत् स्वरूपेण प्रकाशत इति युज्यते। अतो न प्रकाशसत्ता प्रकाश्याधीना, प्रकाशशब्दव्यवहारः प्रकाश्यं विना नोपपद्यते इति चेत्, मा नामोपपादि। शब्द व्यवहारस्योपचारिकतया अशङ्कुकत्वात्। न हि तन्मूलकत्वं शब्दस्तत्प्रकाश्यमिति प्रकाश्यतानियम एव ज्ञानशब्देन बोध्यते। यदि हि तत्प्रकाशरूपं न स्यात्, नायं ज्ञानपदाभिधेयः प्रकाशः क्वचिदपि जगति प्रसरेत्। निर्मूलस्य कस्यापि पदार्थस्योत्पत्तेरभिव्यक्तेर्वा क्वाप्य-दर्शनात्। अस्मच्छरीरे हि ये ये व्यष्टिरूपा मांसास्थिरुधिरादि पदार्था उपलभ्यन्ते तेषां सर्वेषां मूलभूताः पृथिव्यप्तेजोवाय्वाकाश-समष्टिरूपा ब्रह्माण्डे उपलभ्यन्त एव। मन इन्द्रियादीनामपि जनकीभूता समष्टिरूपास्तन्मात्रा अनुमीयन्ते, श्रूयन्ते च तदेवोच्यतेऽभियुक्तैः 'यथाण्डे, तथा पिण्डे, यथा पिण्डे, तथाण्डे' इति ततश्च चैतन्यापरपर्यायं ज्ञानं यदिदं शरीरावच्छिन्न आत्मनि उपलभ्यते—तस्यापि मूलं समष्टिरूपं विविधपदार्थेष्वेवेति तदेव समष्टिरूपं ज्ञानं मूलतत्त्वमिति ख्याप्यते। तदेवा-त्मपदादिपदाभिधेयम्।

●

# आत्मखण्डननिरासः

ये तु लौकायतिका इदानीन्तना वा केचन विभिन्नवादनिरता वदन्ति - नास्त्यात्मभूतस्य चैतन्यस्य किमपि समष्टिभूत सजातीय मूलम्, नापि चात्मा नाम कश्चिद् विलक्षणोऽर्थ, अपि तु सयोगजमिद चैतन्यम्। यथा हि यवुं रत्वचा गुडादिसयोजनान्मदशक्तिर्जायते यथा वा चक्रोपस्थधुरादियोजनेन बहनशक्ती रथे उत्पद्यते यथाच चिरकालावस्थितेषु अपरिपक्व द्राक्षाफलादिषु उच्छूनतां गतेषु बहव क्रमयो जायन्ते, तेषा परस्पर भक्षणप्रक्रियया च भक्षक एको महान् क्रमिरुत्पद्यते। तथैवशुक्रशोणितयोर्गर्भाशयेऽभ्यूतिभावमुच्छूनता च गतयो कृमय उत्पद्यन्ते, तेषा परस्पर भक्ष्यभक्षकभावेन महत्क्रमिरूपमेक शरीर जायते इति वृथैवातिरिक्तात्मेश्वरादि कल्पनेति, तान्प्रति ब्रूम —नैतत्सम्यक् पश्यन्ति भवन्त। ज्ञान स्वविषयान् सृजति, सृष्ट्वा च तान् स्वविषयता नयतीत्यत्र बहून् दृष्टान्तान् पश्याम। यथा हि सन्निहितेषु नानापदार्थेषु द्वित्वत्रित्वादिसख्या ज्ञानमेवोत्पाद्य द्वयादिरूपेण तान् पदार्थान् जानाति। संमुखीनयो पदार्थयोस्तुलना कृत्वा इद लघु, इद दीर्घम् इद स्थूलमेतदपेक्षयेत्यादीनि परिमाणानि ज्ञानमेवोत्पाद्य स्वविषयता नयति, इद द्वय समानम्, अयन्तु विशिष्ट इति सामान्यविशेषभावो ज्ञानेनैव जन्यते। तूष्णीं स्थितस्य मनस्यपि तादृशा पदार्था भासन्ते, ते ज्ञानादेव निष्क्रम्य तत्रैव प्रतीयन्त इति सर्वेषामनुभवगोचरोऽयमर्थं।

तदेतदान्तरं जगदित्युच्यते । स्वप्ने च ये दृश्यन्ते पदार्था, श्रूयन्ते च शब्दास्ते ज्ञानेनैव उत्पाद्यन्ते—उत्पादकान्तरस्य तत्राप्रसक्तेः । अथ य कश्चन शिल्पी कश्चिदभिनवं पदार्थं कटककुण्डलादि वा कटचक्रादि वा आस्तरणादि वा समुत्पादयति, स पदार्थं पूर्वं स्वज्ञाने स्थापयति । अबुद्ध्वैव यदि निर्मिमीते, तर्हि अन्यस्थानेऽन्यदेवोत्पादयति । तस्मात्पूर्वमेव स्वज्ञान-स्थितमर्थं क्रियया बहिः प्रकाशयतीत्येवानुभवसिद्धमुपपत्तिसिद्धञ्च । अपूर्वपदार्थाविष्कारेऽपि तद्वस्तुस्वरूपसम्पादनं ज्ञानरूपायाः कल्पनायाः प्रथममेव कर्तव्यं भवति, अन्यथा यथेष्टनियतवस्तुनिर्माणं न कदाचित्सम्भवे-दिति शिल्पाविष्कारेऽपि वा ज्ञानस्थितमेव वस्तु बहिर्निस्सार्यत इति-यावत् । इत्थं ज्ञानस्यार्थोत्पादकता सततो दृष्टचरी । ज्ञानन्तु ज्ञान भिन्नेनार्थेनोत्पाद्यत इति न क्वापि दृष्टम् । दृष्टानुसारिण्येव च भवति सर्वत्र कल्पनेति कथं ज्ञानस्य परत उत्पत्तिमनुजानीयाम । ननु गोमया-दिषु वृश्चिकाद्युत्पत्तिदृष्टान्तेन फलादिषु कृम्युत्पत्तिदृष्टान्तेन च सम्भवत्येव ज्ञानस्योत्पत्तिरिति चेत्, विषमोऽयं दृष्टान्तः । गोमयादिभिः फलादिभिर्वा किं नामोत्पादितम्, वृश्चिकस्य कृम्यादीनां च शरीरमेव ननु ? तत्तु गोमयादिवज्जडमेव । ज्ञानं तु अस्मन्मतानुसारेण व्यापकमेव तेषु शरीरेषु अभिव्यक्तिमापेदे न तु ज्ञानस्योत्पत्तिः । 'दृश्यते तु' इत्यादिना ब्रह्मसूत्रकृता भगवता बादरायणेन एतदेव कार्यकारणवैलक्षण्यं दर्शितं यद् गोमयादिषु चैतन्याभिव्यक्तिर्न भवति, वृश्चिकादिषु तु भवतीति गोमयाद्या चैतन्यस्य प्राकट्याभावं गोतयन्ति, वृश्चिकादिशरीराणि तु प्रकटयन्तीति । ननु ज्ञानस्य चैतन्यापरपर्यायस्याभिव्यक्तिरपि क्वापि केनाप्युररीकृता । अहमेव मनुररीकरोमि, कस्याप्यागमप्रमाणनिर्णयनिरपेक्षत्वात्, स्फुटमनुभूयमाना

आत्मोत्पत्तिरेव श्रुतौ नाङ्गीक्रियत इति चेदवधेयतां स्यात्। उत्पन्न-मिदं चैतन्यं निरवयवं स्यात्–सावयवं वा ? आद्यश्चेत् तर्हि निर-वयवस्योत्पत्तिर्न क्वापि दृष्टेत्यभिमतमेव पर्यवसानम्। सावयवमुत्पन्नं चेत्, प्रत्यवयवं चैतन्यमित्येकस्मिन्नपि शरीरेऽनेकचेतनप्रसङ्ग न चानु-भवविरुद्ध। ननु भो शक्तिविशेष एव आत्मा–तत्र सावयवत्वनिरवय-वत्वयोर्विचार एव नोदयते, न हि शक्तेरवयवा सन्ति, स्पर्शवत्सु दृश्यमानावयवेषु भूतेष्वेवावयवदर्शनादिति चेद् हन्त। सेयं शक्तिविशेष शरीरस्य प्रत्यवयवमुत्पद्यते—समुदायमये सर्वस्मिन्नेव शरीरे एकैव वा शक्तिः पर्याप्नोति। भवद्भिर्दृष्टान्तीकृता मदशक्तिर्यथा मद्ये प्रत्यवयव स्थिता, तथैव प्रत्यवयवं यदि चैतन्यरूपा शक्तिः, तर्हि बहूनां चेतनानां सर्वथा सामञ्जस्यमेव भवेदिति नियमादर्शनादवयवानां परस्परं विरोधे कदाचिदुत्पन्ने शरीरमुन्मथितमकस्मात् स्यात्–परस्परं सम्बद्धत्वादवयवानां *कदाचिदुपलभ्येत। दृश्यते तु विभिन्नानामपि शिरोवक्ष उदरादिदेशस्थानां* हस्तपादादीनां च सदैवानुकूला प्रवृत्तिः। उदरार्थमन्नार्जने शिरस्थ ज्ञानं मार्गं प्रदर्शयति, उरस्था क्रियाशक्तिश्च चेष्टां कारयति, उदर-मध्यमेन सम्भृतं शिरोवक्ष आदीनाप्याययति, तत्तत्कौतुकदर्शनाय पादौ चक्षुषी स्थानान्तरं नयतः, गमनश्रान्तौ च पादौ चक्षुर्भ्यां प्रदर्शयति इत्यादि। सदैतत्सार्वदिक सामञ्जस्यं विभिन्नेषु चेतनेषु न क्वापि दृष्टम्। एक चञ्चल मुख्य स्थापयितु बहूनामनुचराणामिव प्रवृत्तिरङ्गानामित्यव सम्यगनुभवपथमारोहति। सर्वस्मिन् शरीरेऽभिव्याप्तैकैव चैतन्यरूपा शक्तिरुत्पद्यत इति चेदभ्युपगम्यते तर्हि प्रतिनियतकार्यसम्पादकत्वं न घटते। चक्षुषी केवलं पश्यत एव, श्रोत्रे तु शृणुत एव, पादौ चलत एव, हस्तौ

गृहीत एवेति कुतः ? एवेन शक्तिविशेषेण दत्तशक्तीनां सर्वेषामङ्गानां सर्वकार्यपरत्वं कुतो न प्रादुर्भवेत् । विभिन्नेष्वङ्गेषु विभिन्ना शक्तयश्चैत-न्येनाविर्भाव्यन्त इति चेद्, वामेन चक्षुषा दृष्टं वस्तु दक्षिणचक्षुषा प्रत्य-भिजानीयात्—तदेवेदमिति । पूर्वसंस्कारस्य तत्राभावात् । चक्षुषा दृष्टं च स्पर्शेन प्रत्यभिजानीयात्—यदेव दूराद् दृष्टं तदेव स्पृशामीति । नष्टे चानुभवितरि तस्मिन् तस्मिन्नङ्गे तेनैव सह तज्ज्ञानसंस्कारस्यापि ध्वंसादनन्तरं पूर्वदृष्टस्मरणं न स्यात्-अन्धः पूर्वदृष्टं रूपं न स्मरेत्, बधिरस्य शब्दस्मरणं न स्यात्, पङ्गुः पूर्वानुष्ठितं चलनं न स्मरेदित्यादि ।

द्ययोर्नियो' सन्तोलाम् ( पूर्वं मयेदमन्यथा ज्ञातम्, इदानीं तु सम्यग् जानामि इत्यादि ) प्रत्यभिज्ञा (तदेवेदमित्यादि) स्मृतिश्चेति सर्वमस्तमियात्, एवं विलोपे च सांसारिका' सर्वं एव व्यवहारा विलुप्येरन्, स्मृति प्रत्यभिज्ञायोगत्वात् सर्वव्यवहाराणाम् । ननु स्मृतिरप्येव ज्ञानम्, तदप्येकेन क्षणेन प्रज्वलितेनाविर्भवतीति चेत्, विनैवकारण कथमाविर्भवेत्, पूर्व-दृष्टस्य संस्कारस्तिष्ठति, तेन कालान्तरे तदुद्बोधके प्रादुर्भवति स्मृति । भवता तु अनुमाविद्दलं सदैव निर्वाणम्, न च तस्य संस्कारोऽन्यमाहित इति च स्मरेत् । यथादृष्टकार्यकारणभावोऽपि विना प्रमाण कथमन्यथा-क्रियेत ? तदेव दल पुन प्रज्वलित स्मरति चेत् प्रत्यभिज्ञा तु नैवोदियात् । स्मृतिप्रत्यक्षसमूहरूपत्वात् प्रत्यभिज्ञाया । स्मृतिरन्यस्य प्रत्यक्ष चान्यस्येति कथ द्वयो. समागमो भवेत् ? वय हि बहुकालात्पूर्वस्याप्यतीतस्य स्मरण कुर्म —बाल्ये मयेदमनुभूतमिति । पूर्वेण ज्ञानेनेदानीन्तन ज्ञान तुलयाम , पूर्वमिद ज्ञातम्, इदानीन्त्वेव जानामीति, पुरुषान्तरस्य ज्ञानेनापि स्वज्ञान तुल्याम , स न सम्यग् वेत्ति, वयन्तु सम्यग् जानीम , इति। तदेतत्सवमप्ये-कस्मिन्नित्ये द्रष्टर्यसति नैवोपपद्येत, भौतिकाना कणानामियत्काल स्थितय-भावात् । स्वप्नस्तु सर्वथैव नोपपादयितु शक्यत एभि । विषयासन्निधाने वस्तावत्कणाना प्रज्वालको भवत्विति । तदेतदुक्त महर्षिणा याज्ञवल्क्येन यतिधर्मप्रकरणे—

> महाभूतानि सत्यानि यथात्मापि तथैव हि
> कोऽन्यथैकेन नेत्रेण दृष्टमन्येन पश्यति
> वाचं वा को विजानाति पुन संश्रुत्य संश्रुताम्
> अतीतार्थस्मृति कस्य को वा स्वप्नस्य कारक ॥ इत्यादि ।

विश्चान्त शरीरे स्थितायाश्चैतन्यशक्तेमस्तिष्कवणाना या बाह्यैर्थे कथ सम्बन्ध उपपाद्येत ?–तेषा बहिर्निर्गमनासम्भवात्। विषयान् रूपादीन् स्पृष्ट्वा सूर्यकिरणा शरीरान्तरागत्य तं सबध्नन्तीति चेत्, हन्त न वस्तुनि शरीरान्तरागच्छन्ति, न वा चैतन्य बहिर्गच्छति, इति विषय चैतन्ययो सम्बन्धाभावे सूर्यकिरणमात्रेण कथ विषयप्रकाश इति सर्वथा दुरुपपादमिदम् । किं च त एव सूर्यकिरणा लोष्ठप्रस्तरादिष्वपि गच्छन्ति, तत्र कुतो न विज्ञानाख्यो विषयप्रकाश । शरीरान्तस्थिते चैतन्य एवास्ति तादृशो विशेष , येन तत्रैव ज्ञानापरपर्याय विषयप्रकाशो जायत इति चेद, जडेभ्य एव समुत्पन्ने चैतन्ये कथ जडवैलक्षण्य सभवेत्। तस्माद्विशेषमभ्युपगच्छता भवता नित्यज्ञानरूप एवात्मा भङ्ग्यन्तरेण स्वीकृत इति नाममात्रे विवाद । भवतु वा रूपविषये सूर्यकिरणवाचोयुक्ति कथचित्, तत्तद्वस्तूना वर्तुलप्रलम्बस्थूलाद्याकारा, परस्परमर्थाना सयोग, पार्थक्य वा, दूरस्थता सामीप्य वेति सर्व कथमनुभूयेत नाम बाह्येन विषयेण साक्षादसबन्धे । सवमिदमनुमिति रूप ज्ञानम्, रूपकिरणाना वैषम्येण तरङ्गतारतम्येन सर्वमिदमनुमीयत इति यद् वैज्ञानिका वदन्ति तदपि नानुभवानुकूलम् । रूपविशेषस्य दूरत्वसामीप्यादे परिच्छेदादेश्च तुल्यकालमेव जायतेऽनुभव , अनुमितौ तु पूर्व रूपज्ञानम्, तदनु व्याप्तिस्मरणम्, तदनु दूरत्वादिज्ञानमिति क्षणभेदोऽनुभवविरुद्ध एव कल्प्येत । मम तु विभुरात्मा चक्षुषा द्वारेण विषये सबद्ध सव जानाति युगपदेवेति सर्वमुपपद्यते । किं च न केवल प्रत्यक्षमेव ज्ञानम्, अनुमितिशब्दाद्या बाह्यविषयका कथमुपपद्येरन् ? वर्णप्रज्वालस्य विषयसम्बन्धस्याभावात् । पूर्वनिर्दिष्ट सस्कारविशेषोऽपि वर्णविशेष प्रज्वालयतीति

चेद् भवतु नाम तेन संस्कारेण पूर्वदृष्टस्य वह्निधूमस्य च स्मृतिः, इदानीन्तु सन्निहिते प्रदेशेऽग्निमनुमाय तत्र प्रवर्तमाना वयमग्निं यल्लभामहे तत्र सन्निहिते प्रदेशे वह्निज्ञानं कथमुदयेत ? तत्स्थाने वह्नेः पूर्वदर्शनाभावेन संस्कारस्याप्यभावात्। विषयेण वह्निना सह चक्षुःसम्बन्धस्य चानन्तरमुत्पत्तिप्रसङ्गात्। किञ्च नवीनेष्वाविष्कारेषु तत्र तत्र या या शक्तिमनुमाय तज्जातीयमन्यदपि महत् कार्यमनेन सम्पादयितुं शक्यमिति क एतद् व्यवस्थापयति ? यथा बाष्पयानाविष्कर्त्रा निरुद्धस्य पात्रस्याग्नेरुपरि स्थापितस्योत्प्लवनम् दृष्ट्वा बाष्पशक्तिरनुमिता, परमनया शक्त्या बृहत्तरा स्थलशकटिरव यन्त्राणि संयोज्य परिचालयितुं शक्यत इति केन कल्पितम् ?

तादृशस्य संस्कारस्य पूर्वमभावात्। शब्देनातिलघ्व्या सूच्या प्रकम्पनं दृष्ट्वा शब्दे परिचालनशक्तिरनुमितास्तु, परमेव यन्त्राणि संयोज्य कालान्तरेऽपि स एव शब्दः श्रावयितुं शक्यत इति क एतत् कल्पयित्वा फोनोग्राफयन्त्रमाविष्करोति। तस्मादेकस्य द्रष्टुरनुमातुः कल्पकस्य च स्थिरस्याभावे किमप्येतत् कथमपि नोपपद्यते। ननु भवत्स्वीकृतोऽतिरिक्त आत्मा यथा सर्वमेतत्कल्पयति तथास्माकं भूतसंयोगजस्चैतन्यस्य शक्तिविशेषोऽपि सर्वमनुसन्धाय कल्पयिष्यति इति चेद् बाढम्, परं स शक्तिविशेषस्तु सर्वेष्वेव चेतनेषु विशेषतो मनुष्येषु तु सर्वत्र समवन् एव स्यादिति सर्व एव तथाविधानाविष्कारान् कुतो न विधातुं शक्ता ? कस्यचिद् बुद्धिपाटवम्, कस्यचिद् वस्त्राद्युत्थम्, कश्चिद्धनोपार्जनोपायानेव सर्वाधिकान् जानाति, कश्चन नवनवां कलां कल्पयितुं प्रवीण इति वैषम्यं कुतः स्यात्। यद्यद् येन शिक्षितं तत्रैव तस्य पाटवमितिचेत्, समानमधीयानां शिक्षमाणानामपि न सर्वे आविष्कर्तारो भवन्ति, कश्चिदेव तु तथा प्रवीणो भवतीति

प्रज्ञापाटवं कस्यचिदेव कुतस्त्यम्? समानयोरेव रजोवीर्ययो: सर्वत्र चैतन्योत्पत्तिकारणत्वेन कारणवैषम्याभावे कार्यवैषम्यस्य सुतरां दुरुपपादत्वात्। रजोवीर्ययोरपि मातापितृजाः संस्काराः संक्राम्यन्तीति तु न भवता वक्तुं शक्यम्, अदृष्टानां संस्काराणां प्रत्यक्षादिभिर्ग्रहीतुमशक्यत्वात्, अदृष्टस्य च भवताऽनभ्युपगमात्। अदृष्टमपि स्वीक्रियते चेद् आत्मभूतस्य नित्यज्ञानस्यैव स्वीकारे को नाम विवादः? मातापितरौ च परमार्थं वस्तु न भवन्तावभूताम्, तदपि पुत्रेण विशदं सम्पाद्यते इति च पुनरपि भवन्मते नूतनमेव। मम तु नित्यस्यात्मनोऽनश्वरत्वं शरीरान्तरग्रहणपरम्परायाः अनादित्वेन पूर्वपूर्वसंस्कारवशादपि संस्कारपाटवेन सर्वमपि वैषम्यं सूपपादं भवति। यदि भवतापि चैतन्यरूपा शक्तिरेव नित्या सर्वसंस्काराधारभूता चोपगम्यते, तर्हि स एवास्माकमात्मेतिनाममात्रेऽस्य विवादोऽकिञ्चित्कर एव प्रसक्तः। येऽपि च वदन्ति भवतु नाम ज्ञानमतिरिक्तः पदार्थः, परं तस्य नित्यत्वं तु नाभ्युपगन्तुं शक्यम्, अस्मत्-ज्ञानस्य क्षणिकत्वानुभवेन ज्ञानमात्रस्य क्षणिकताया एवानुमानादिति तेऽपि पूर्वोक्तया स्मृत्याद्यनुपपत्त्या निरस्ता बोधनीयाः। किञ्च अस्मज्ज्ञानेन यथाऽस्मदान्तरं जगदुत्पद्यते, तथा बहिर्जगदिदं येन ज्ञानेनोत्पद्यते तदपि विभु ज्ञानमङ्गीकर्तव्यमेव। अन्तर्जगति बाह्यजगतश्चेदमेव स्फुटं वैलक्षण्यम् यदस्मदीयान्तरं जगदस्माभिरेवानुभूयते, न तत्र परस्य सम्प्रतिपत्तिरस्ति, अन्येन तस्याज्ञातत्वात्। अन्यस्यचान्तरे जगत्यस्माकं सम्प्रतिपत्तिर्विप्रतिपत्तिर्वा नास्ति तस्यास्माभिरज्ञानात्। बहिर्जगति तु अस्त्यस्माकं सर्वेषामपि संप्रतिपत्तिः, अयं पर्वतः, इयं नदी, एतन्नगरम्, इत्यादौ सर्वेषामेवैकविधानुभवात्। यं पदार्थमाभास्महे तदस्माकं ज्ञाननिष्ठमस्म-

दन्तर्जगति तिष्ठत्येव, किन्तु न तेन तृप्तिस्स्येति, बहिस्तु यदा तत्प्राप्यते तदा भवत्यानन्दस्तृप्तिश्च । आशामोदके रसवीर्यविपाकादि न दृश्यते जायमानम् । बहिर्जगत अन्तर्जगति प्राप्तैस्तु तैः सर्वमिदं जायत इति बहिर्जगतापलब्धिस्तु वाच्यम् । तदपि तु ज्ञाननिष्ठमेव बहिराविर्भूतम् इति प्राक् प्रदर्शितया प्रक्रियया स्वीकार्यमेव भवेत् । यत्रास्माभिः सर्वं सम्प्रतिपन्नं वा दृष्ट्वेवास्माभिर्गृह्यमाणमिदं सर्वमन्तर्भूतम्, तदेवेश्वर ज्ञानम्, ईश्वररूपं ज्ञानम्, मूलतत्त्वरूपं ज्ञानमिति वा कथयाम । तच्च विभु नित्यञ्च स्वीकर्तव्यमेव, कस्मिन्नपि प्रदेशे कस्मिन्नपि च काले जगतः सर्वथा अभावानवगतेः । यद्यपि महाप्रलयादौ जगन्नास्ति, तथापि बहिर्नास्तीत्येवैतात्पर्येण तदभावो निगद्यते । तस्मिन् मूलभूते तु ज्ञानेऽन्तर्निहितमस्त्येव, अन्यथा कथं प्रादुर्भवेत् । अभावोऽपि च जागतानां पदार्थानां जगदन्तर्भूत इत्यभावसत्त्वेऽपि जगदस्त्येव । देशकालावप्यस्माभिः प्रत्यभिज्ञायमानौ जगदन्तर्गताविति तस्मिन् प्रकाशरूपे मूलभूते ज्ञाने स्थितौ न तत्परिच्छेदायालं भवतः । प्रकाशाद् बहिर्भूतयोर्देशकालयोरप्यसत्त्वापत्तेरिति देशकालापरिच्छिन्नत्वरूपे विभुत्वे नित्यत्वे च तस्य न कोऽपि विवादावसरः ।

तदित्थं मूलभूतं नित्यं मुख्यं ज्ञानमुपपत्त्या विवृतम् ।

# ज्ञातृज्ञानज्ञेयरूपत्रिपुटीप्रादुर्भावः

अनन्तरं निरूपयिष्यमाणा मायाख्या शक्तिर्यदा सत्तावदिदं ज्ञानमपि परिच्छिनत्ति, तदात्र ज्ञाता, ज्ञानम्, ज्ञेयमिति त्रिपुटी प्रादुर्भवति। सामान्यरूपा सत्ता विशेषात् प्रादुर्भाव्य माया परिच्छिनत्तीति प्राग् व्याख्यातम्। इह तु ज्ञानं परिच्छिन्दती विभुत्वस्वभावस्य ज्ञानस्य विरोधित्वात् सा अज्ञानमित्यभिधीयते। इदमज्ञानमेवाभिलक्ष्य पुराणेषु बहुत्र सर्वत्र पूर्वमविद्यासर्गएव विव्रियते। तदुक्तं लिङ्गपुराणे पञ्चमेऽध्याये—

यदा स्रष्टुं मतिं चक्रे मोहश्चासीन्महात्मनः।
द्विजाश्चाबुद्धिपूर्वं तु ब्रह्मणोऽव्यक्तजन्मनः॥ १ ॥
तमो मोहो महामोहस्तामिस्रश्चान्धसंज्ञित।
अविद्या ह्येषा प्रादुर्भूता स्वयंभुवः॥ २ ॥

यद्यपि अविद्या, अस्मिता, रागः, द्वेषः, अभिनिवेशः इति तमो मोहादिपदवाच्यानि पञ्चपर्वाणि तामसबुद्धिविकारा बह्वपि प्रादुर्भवन्ति, परं सर्वेषामेतेषां मूलं ज्ञानसंकोचकमज्ञानं प्रथममेव प्रादुर्भवति। तद्विना सृष्टेः प्रादुर्भावासंभवादिति तात्पर्यमवसेयम्। अविद्यैवेयमज्ञानपदाभिलप्या। अज्ञानमिह ज्ञानविरोधिभावरूपमेव विवक्षितम्, न तु ज्ञानाभावमात्रमिति निरूपितमेतद्वेदान्तग्रन्थेषु विस्तरेण सूरिभिः। सत्तावद् ज्ञानमपि न वस्तुतः परिच्छिद्यते, अपि तु अपरिच्छिन्नमेव मायया परिच्छिन्नवदवभासत इति न विस्मर्तव्यम्। अज्ञानरूपा माया ज्ञानमावृणोति, तदुक्तं भगवद्गीतासु—

"अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः"

—इति।

आवृतं तु ज्ञानं सङ्कोचं गच्छति इति स्वाभाविकमेव। आगमशास्त्रे तु प्रकाश इत्याख्याते ज्ञानरूपः परमशिवः स्वातन्त्र्येण स्वेच्छयैव सङ्कोचं गृह्णाति। अन्यस्य तत्सङ्कोचसामर्थ्यासम्भवादिति व्याख्यायते। तस्याप्ययमेव तात्पर्यम्। स्वातन्त्र्यस्य स्वेच्छायाश्च शक्तित्वेनैवोपगमात्। मायाशब्दस्तु तेषामावरकशाक्ते तत्त्वे निरूढ इति संज्ञाभेदमात्रमिदम्। भवति च तच्छास्त्रेऽपि द्वेधा मायापदप्रयोगः। स्वातन्त्र्यरूपा मूलभूता शक्तिरपि क्वचिन्माया पदेनाभिधीयते, ईश्वरशक्ते शुद्धविद्याया महामायापदेन प्रसिद्धाया अनन्तरमुद्भूता मोहजननी अवरा शक्तिरपि च मायापदव्यपदेश्येति मूलभूतया स्वातन्त्र्यरूपया मायया ज्ञानरूपस्य परमशिवस्य सङ्कोचः सम्पाद्यत इति न किमपि विरुद्धम्। यच्चेदमावरकमज्ञानमाख्यातम् तदपि ज्ञानान्नात्यन्तं भिद्यते। ज्ञानविरोधितया तदपि वयं जानीम इति ज्ञानविषयतामापन्नं वयं ज्ञानाद्भिन्नं स्यात्। ज्ञानादत्यन्तं भिन्नं हि न ज्ञानविषयः सम्भवतीति प्रागेवावोचाम। तस्माज्ज्ञानमेव मायावशेन स्वस्वरूपमेवावृणोति इति आगमशास्त्रोक्ते स्वातन्त्र्य एव पर्यवसानम्। अतएव जगति दृश्यमानं ज्ञानविरुद्धमज्ञानमपि बुद्धिवृत्तिरित्येव सांख्यैराख्यायते—

अध्यवसायो बुद्धिर्धर्मो ज्ञानं विराग ऐश्वर्यम्,

सात्त्विकमेतद्रूपं तामसमस्माद्विपर्यस्तम्।

—इति।

धर्मो ज्ञानं वैराग्यमैश्वर्यमिति चत्वारि बुद्धेः सात्त्विकानि रूपाणि। अधर्मः, अज्ञानम्, अवैराग्यम्, अनैश्वर्यम् इति तु चत्वारि तामसानि बुद्धेरेव

रूपाणि इति। यद्यपि अज्ञानपदेनात्र अन्यथाज्ञानमेवावधते श्याऽप्राकृत, तथापि तुल्यन्यायाद् अज्ञानम्, अन्यथाज्ञान चेत्युभयमप्यत्र सग्राह्यता-मर्हति। एव जगदन्तर्गतमज्ञान यदा ज्ञानस्यैव रूपान्तरम्, तदा मूलभूत मज्ञानमपि तथैव मन्तव्यम्। भवतु नाम, अनिर्वाच्य सर्वमिद केवलमृत-म्भरया प्रज्ञया समाधौ प्राह्यमिति किन्त्वत्र वाग्विस्तरेण। इदन्त्वग्रे शक्यत व्याख्यातुम्—यत्सकुचितमिव यदा ज्ञान मर्यादाबन्धे पतितमिव तदा तत्र मध्यविन्दुरपि समुन्नेतु शक्यो भवति, यो नाभिकेन्द्रादिपदैः श्रुतिस्मृत्या-दिष्वभिधीयते। अपरिच्छिन्ने हि न नाभि सन्नेतु शक्य, परिच्छेदे तु नाभिर्नाम मध्यविन्दुर्गृह्यत एव प्रयासेन। सर्वस्यापि च वस्तुन केन्द्र-समीपे घनीभाव, विप्रकर्षे तु विरलता दीपशिखादीनामिवेत्यनुभव सिद्ध प्रज्ञाजुषाम्। तथा च यत्र घनीभाव, स ज्ञानघनो ज्ञानरूप आत्मा व्याख्यते। यत्र तु विरलता तदात्मनो रश्मिभूत ज्ञानमाख्यायते सकोच-वशात ज्ञानेन परिरयमत च प्रदेश ज्ञानादाविर्भूतास्तदशा ज्ञेयभूता विषया आक्राम्यातीति ज्ञातृ-ज्ञानज्ञेयरूपा त्रिपुटीय निष्पन्ना। इदमेवाभिप्रेत्य श्रीरामानुजीयादिवैष्णवदर्शनेषु आत्माणुरूप, तद्रश्मिभूत ज्ञान च सर्व-शरीरव्यापि व्याख्यायते, सोऽय परिच्छेद कृत एव काल्पनिको ज्ञातृज्ञान-भेद। यच्च विभु कस्यचिद्वस्तुतो वा अवभासरूपेण वा परिच्छेद मीयते, तत्सदैव परिच्छेद विभिद्यापरिच्छिन्नता मन्तुमीहत इति प्रकृतिसिद्ध-मिदम्। ततश्च परिच्छेद प्रापित ज्ञानमपीद सततमेव प्रसरत्परिच्छेद दूरीकर्तुमेवेहते, तत एव विषयानिद सततमभिव्याप्य स्वात्मनि नेतु प्रयतते। यावच्च ज्ञान प्रसरति, तावदज्ञानमपसरति। तेन यत्पूर्वमज्ञातम्, अर्थादज्ञानविषयीभूतमासीत, तत्क्रमेण ज्ञानविषयतामापद्यत इति

सर्वेषामनुभवगोचरीभूतोऽयमर्थः । अध्ययनम्, उपदेशश्रवणाय—इत्याद्या अज्ञानापसरणस्यैवोपाया स्वप्रसराय ज्ञानेनैव समायोज्यन्ते । तैश्च ज्ञान प्रसरोऽपि स्फुटमनुभूयते । इन्द्रियद्वारेणापि ज्ञान प्रसरति प्रसरोऽयं नाभिनवज्ञानोत्पाद अपि तु अज्ञानावरणदूरीकरणमिति नैतद्विस्मर्तव्यम् । इदमज्ञानापसरणमेव ज्ञाततोत्पत्तिरूपेण मीमांसका व्यवहरन्ति इति वर्णनप्रक्रियाभेदमात्रम् । यत्र च ज्ञानप्रसरनिरोधस्तत्र जिज्ञासाया अनुपशमे दु:खमनुभूयते । एवं प्रसरदिदं ज्ञानं यदा पुनरपरिच्छिन्नं भवति, तदेव मायावरणाद्विमोके मुक्तिराख्यायत इति सुसूक्ष्ममनुसन्धेयम् । सोऽयमन्तो त्रिपुटीविमोक्षः । सर्वं जगद् व्यवहारान्तु त्रिपुट्यैव निरुह्यन्ते । इदानीं हि वयं विषयसवलितमेवज्ञानं प्रतीमः, विषयविनाकृतं ज्ञानस्वरूपमेव न सम्भवतीति परिचिनुम, तदेतत्सर्वं विजृम्भितं मायायाः । इत्थं मूलभूतं ज्ञानं मुख्यम्, अस्माभिः परिचीयमानन्तु योगजमिति विस्तरेणोपपादितम् ।

एवमानन्दोऽपि विवेच्यः । शान्त्यानन्द एव मुख्यः, समृद्ध्यानन्दस्तु योगजश्चानित्यश्चेति । आनन्दरूपो विभुरात्मा मूलतत्त्वम् । यथा हि सदंशस्य सङ्कोचो ज्ञानांशस्यावरणं च मायया प्राग्व्याख्यातम्, तथैवानन्दांशोऽपि मायया आव्रियते, सङ्कोचमापद्यते वा । आवृतः सङ्कोचमञ्चंश्च स्वमहिम्ना परिच्छिन्नं स्वस्वरूपमेवाप्तुमीहते इत्यनुपदमिदमुक्तं ज्ञान प्रकरणे । तथैवानन्दांशोऽप्यपरिच्छेदमाप्तुं वर्द्धितुमीहते । तत एव सर्वोऽपि जनः पुत्रादिकुटुम्बस्य धनगृहभूम्यादिसम्पदश्च वृद्धिमेवाभिकाङ्क्षते—तामेवानन्दमभिमन्यते । दुर्दैवात् सम्पन्ने च कुटुम्बसम्पदादि ह्रासे दु:खमनुभवति । श्रुतिरप्येतदवाह—

"यो वै भूमा, तत्सुखम्, यदल्पं तद्दुःखमिति ।"

बीजचिति, देवचिति भूतचिति, पुत्रकलत्रादिभूमिगृहादिसम्पच्चेति पञ्चधा व्यावहारिकस्यात्मनो व्याप्तिर्व्याख्यायते। यदा हि कश्चिद्‌भिनवासपद् गृहारामादिकं वा धनं वा पुत्रादि वा लभते, तदा सरसवस्त्वात्मनि प्रवेशयितु ध्रुवो व्यावहारिक आत्मा प्रसरति, सोऽयं वित्तलाभपर्याय आत्मन प्रसार एव समृद्ध्यानन्द। स चोत्फुल्लेन मनसा गृह्यते सर्वेणापि जनेन, "आनन्दमनुभवामीति" सर्वेषामप्यनुव्यवसायात्। सोऽयमानन्दानुभव कञ्चिदेवकाल भवति, अनन्तर तु तद्वस्तु स्वीयतामापद्य तिष्ठति, तथापि प्राप्तिकाले य आनन्दाऽनुभवोऽभूत स न स्थायी भवति। तृप्तिस्तु अनुभूयते, तृप्तिर्नाम यद्धेरभावं शान्तिरेव एव शक्यते वक्तुम। अप्राप्तप्राप्तौ चेतस उल्लास, अनन्तर तु आत्मनि गमिते तस्मिन् वस्तुनि आत्मन स्वाभाविकी तृप्तिरेव, न तु मानसोल्लास इत्यनुभवपथ मायाति स आनन्द। यदि तु पुन कदाचित्तद्वस्तु अपह्रियते तदात्मांशप्रच्यवनाद् दु खमुदेति। इत्थ च यदि सर्वमपि जगत वस्तुजातमात्मनि प्रविष्ट स्यात, तर्हि अपूर्वप्राप्तरनवसरात समृद्ध्यानन्द उदेतु नैवावसर लभत इति मुवतो समृद्ध्यानन्दो न्यायदर्शन प्रत्याख्यायते, तथा दृष्टौ समृद्ध्यानन्दस्यैवानन्दपदेन बोधनात।

वैदान्तिनस्तु शान्त्यानन्दमेव मुख्यमानन्द मन्वत इति तेषा सिद्धान्ते मुक्ति परमानन्दात्मिका। प्राप्तव्यवस्त्वभावेन चेतसि चाञ्चल्योदयावसराभावात, मुक्तस्य सर्वात्मभूतत्वेन न तस्याप्राप्त किमपि विद्यत इति वस्य लिप्सया चाञ्चल्यमुदेतु। कस्य वा प्राप्त्या समृद्ध्यानन्दो जायताम? कि च शरीरेन्द्रियादिविरहेण शुद्धस्यैकस्याखण्डस्यात्मनो नित्यस्यैव मुक्तौ परिशेषादशविच्छिन्नतापि न सम्भवतीति दु खस्यापि नास्ति प्रसग।

स्वर्गादौ तु उत्तरोत्तरमुन्नतेर्जायतेऽभिलाष इति तत्र समृद्ध्यानन्दोऽपि, तत्तत्पदविच्छेदे दुःखमपि चानुभूयत एव। समृद्ध्यानन्दापेक्षया शान्त्यानन्द मुख्य मत्वैव शास्त्राणि स्वर्गाद्युपेक्ष्य मोक्षायैव प्रयतने मनुष्यजन्मसाफल्यमुपदिशन्ति। लौकिकानामपि चास्त्येवमेवानुभवः। अतएव सर्वविधसमृद्धिभाजोऽपि अनवरतमिन्द्रियविषयानुपभुञ्जाना अपि तानुपेक्ष्य सुषुप्तिमभिवाञ्छन्त्येव। सुषुप्तौ हि शान्त्यानन्दो यदि समृद्ध्यानन्दापेक्षया मुख्यो न स्यात् न तर्हि इन्द्रियग्राह्यान् विषयानुपेक्ष्य सुषुप्तिं कश्चिदभिवाञ्छेत्। वाञ्छन्ति तु सर्वेऽपि प्राणिनः। ततश्च शान्त्यानन्दस्यैव मुख्यता सिद्ध्यति। तत्रैवान्ततो निलीयते समृद्ध्यानन्दः। तदेतदेव प्रतिभाति यत्क्षणिकः स समृद्ध्यानन्दः शान्त्यानन्दे निलीय स्थितः।

अपरे तु समृद्ध्यानन्दस्योत्पत्तिमपि शान्त्यानन्दादेव व्याचक्षते। कस्यचिद्वस्तुन आकाङ्क्षा यदा चेतस्युदेति, तदा तद्वशाच्चेतसि चाञ्चल्यं जायते। यदि कश्चिन्मनुष्यः स्वयोग्यमधिकारमभीप्सति, तर्हि यावन्न लभ्यते सोऽधिकारः तावच्चाञ्चल्यं तस्य मनसि वर्तत एव। इतस्ततो यथाशक्यं स विचेष्टते, कुत्र मद्योग्यं स्थानमिति समाचारपत्रेषु प्रत्यहमवलोकयति, जनान् पृच्छति, अधिकारिणोऽनुगच्छति, भोजनशयनाद्यपि तस्मै न रोचते। यदा तु दैवात् तेन कुतश्चिद्वृत्तं प्राप्यते 'नियुक्तो भवान् अस्मिन्नधिपदे' इति, तदा तच्चाञ्चल्यं चेतसो निवर्तते। निवृत्तचाञ्चल्ये स्थिते च मनसि आनन्दरूप आत्मा प्रतिबिम्बतीत्येव तस्यानन्दानुभवः। तदित्थं स समृद्ध्यानन्द आत्मभूतस्य शान्त्यानन्दस्यैव प्रतिबिम्बभूत इति तत्र एव सिद्धान्तः। एवमेव सर्वेष्वानन्दानुभवेषु सूक्ष्ममालोचनीयम्। तदेतदुक्तं महाविदुषा भर्तृहरिणा—

तृषाशुष्यत्यास्ये पिबति सलिलं स्वादु सुरभि
क्षुधार्तः सन् शालीन् कवलयति शाकादिवलितान् ।
प्रदीप्ते कामाग्नौ सुदृढतरमालिङ्गति वधूं,
प्रतीकारो व्याधेः सुखमिति विपर्यस्यति जनः ।।—इति ।

सर्वं सुखापरपर्याय समृद्ध्यानन्दो दुःखाभावमात्रमिति पद्यतात्पर्यम् । दुःखक्षोभचाञ्चल्यादीनामभावश्च प्रसादापरपर्याय शान्तिरूप एवेति शान्त्यानन्दादेव समृद्ध्यानन्दस्योत्पत्तिः, तत्रैव च लय इति तस्यैवेयं परिणतिः स्पष्टतया सिद्धा । अनयाऽपि प्रक्रियया आत्मनो रसरूपता स्फुटीकृता । लौकिकास्तु समृद्ध्यानन्दमेव परिचिन्वन्तीति लोकसिद्धमर्थमनुवदितुं भगवता पाणिनिना 'टुनदि समृद्धौ' इति धातुपाठे पठितम् ।

तदित्थं मूलतत्त्वस्यांशरूपेण जगतिसर्वेषु पदार्थेषु सच्चिदानन्दा व्याख्याता । तेन लोकसामान्यपरिचितेभ्य सत्ताज्ञानानन्देभ्यो विलक्षणा. तेषां जनश्च अलौकिका निगूढतया तुच्छपदाभिधेया इत्यपि स्फुटीकृतम्, एषु च सत्ताज्ञानानन्दशब्दप्रयोगो असद्रूपता परप्रकाश्यता क्षोभचाञ्चल्यादिदुःखरूपता च व्यावर्तयितुमेव क्रियते, न तु सत्ताध्यत्वादिनेऽपि तत्तद्विवेचनेन लभ्यम् । इमामेव प्रक्रिया मनसि निधाय श्रीशङ्कराचार्याश्चभावरूपतामेषां व्याकुर्वन्ति, श्री रामानुजाचार्याश्च परमतत्त्वरूपस्य परमेश्वरस्यालौकिकगुणत्वमेषां ख्यापयन्ति । लौकिकान् पुत्कलतपोषतान् सच्चिदानन्दांश्च लक्ष्यीकृत्य श्रीवल्लभाचार्या परतत्त्वाद् भगवत उत्पत्तिमेषां व्याचक्षत इति सर्वमिदं निरूपणप्रक्रियाभेदमात्रम्, न तु वस्तुगत कोऽप्याचार्याणां विरोध इति सम्यगेतत्सुधीभिर्विभाव्यम् । एतावता परिकरेण मूलतत्त्वस्यानन्दरूपतामुपपाद्य रसशब्दप्रयोगस्तत्रसमर्थित ।

सोऽयं रस सर्वस्यास्य प्रपञ्चस्य मूलतत्त्वमिति सिद्धम् ।

# वैज्ञानिक-प्रक्रियाया शक्तिव्याख्या

अथ श्रीगुरुचरणानां वैज्ञानिकीं समन्वयरूपां प्रक्रियामवलम्ब्य शक्ति-तत्त्वमपि व्याख्यायते। एतादृशमखण्डमेव तत्त्वं परिणन्तुं नय समर्थमिति शङ्कां व्यपनेतुं श्रुतिपुराणादिषु शक्तिः स्वीकृता। इयं शक्तिर्बलपद-व्यपदेश्या भवति। बलम्, शक्तिः, क्रिया इत्येक एवार्थोऽवस्थाभेदेन भिन्नैः शब्दैर्व्यपदिश्यते।

किञ्चिदकुर्वद् आश्रयादभिन्नरूपं प्रसुप्तमिव यावद्भवति, तावद्बल-मित्युच्यते। जागरितं कुर्वद्रूपतां गतं तदेव शक्तिपदाभिलप्यं भवति। कार्यरूपेणपरिणतं तु तदेव क्रियापदव्यपदेश्यम्। यथा विद्युति विद्यते प्रकाशनसामर्थ्यम् परं तद्विद्युदभिन्नं प्रसुप्तमिव यावद्भवति, तावद्बलमेव तदुच्यते। तारयोगेन काचादिबिल्लन (बल्ब) मासाद्यकुर्वद्रूपतां गतं तदेव शक्तिपदवाच्यं भवेत्। प्रसरणेन प्रकाशं कुर्वत्तु स्पष्टमेव क्रियारूपम्। तथैव ब्रह्मण्यपि सर्वबलाधारभूतं बलमास्थेयम्, तदेव जागरितं शक्तिरूपतां सृष्ट्यादि क्रियारूपतां च क्रमेण गच्छति। शक्तिरेव परत्रापि स्वससर्गेण प्रभावमुत्पादयन्ती क्रियेति व्यपदिश्यते।

क्रियैवास्माभिर्दृश्यते—तथैव शक्तिर्बलं च तस्याः साक्षात्, परम्परया च कारणे अनुमीयेते। यद्यपि क्रियानामेयमत्यन्तापरिदृष्टा, न शक्या पिण्डीभूता निदर्शयितुम्, इति व्याकरणमहाभाष्यकृता क्रियाया अपि प्रत्यक्षागोचरत्वमुक्तम्। अतिस्वल्पक्षणमात्रावस्थायित्वेनातिसूक्ष्मत्वात् क्रियायाः प्रत्यक्षं न सम्भवति। उत्पन्नस्य चक्षुर्विषयतामापन्नस्य प्रत्यक्ष

सम्भवेत्, क्रिया तूत्पन्नैव ध्वंसेनाकाम्यत इति चक्षुषा सम्बन्ध एव तस्या नोपपद्यते तदा कुतः प्रत्यक्षम् ? अस्माकमङ्गुलिरस्माभिर्वितस्तिमात्र परिचालिता, तावदेव वितस्तिमात्रे यावन्त आकाश देशाः कल्पेरन्—तावद्भिः क्रमेण संयोगविभागजननार्थं शतशः क्रिया अभ्युपगन्तुमापद्यन्ते। कथमेवं विधाया सूक्ष्माया प्रत्यक्ष सम्भवेत् ?

न च तत्समुदायः प्रत्यक्षो—भवतीति यदि वाक्यं वक्तुम्, उत्पन्नप्रध्वस्ताना परस्परं सहयोगासम्भवेन समुदायस्यैवासम्भवात्। एवमेव सूच्योत्पल शतपत्रभेदेऽपि क्रियायाः सूक्ष्मतमता तत्र तत्र व्याख्याता, तस्मात् क्रियापि सहयोगविभागानुमेयेवेति भाष्यकृतोऽभिप्राय.। पर प्रत्येकं क्रियाया अप्रत्यक्षत्वेऽपि धारावाहिकतां गता सा प्रत्यक्षेण गृह्यते—इति 'अङ्गुलिश्चलति', 'देवदत्तश्चलति' इत्याद्यनुभवाना प्रत्यक्षत्वमेव लौकिका अभिमन्यन्ते।

नैयायिकाश्चाप्युत्तरदेशसंयोगपर्यन्त क्षणचतुष्टयं क्रियाया अवस्थिति स्वीकुर्वन्तीति व्यावहारिक क्रियायाः प्रत्यक्षं कथमनुपपन्नम्। उत्पन्न-प्रध्वस्ताना क्रियाणा स्वतः समुदायो न सम्भवतीति सत्यम्, आश्रयमवलम्ब्य तु धारावाहिकता गतायाः सम्भवत्येव समुदाय इति लोकानुभवः।

न च संयोगविभागाद्या अपि धारावाहिकक्रियास्वरूपादतिरिच्यन्ते। तस्मात्प्रत्यक्षगतया क्रियया शक्तिर्बलं वानुमीयते—इति युक्तमेव। इन्धनादि दाहरूपा क्रिया - दृष्ट्वा - वह्नौ दहनशक्तिरनुमीयते, सा च शक्ति पूर्वमप्यासीदेव, अन्यथा कुतोऽकस्मादाविर्भवेत् ? इति आविर्भावात् पूर्वं प्रसुप्तावस्थापन्न बलमपि शक्त्यानुमेयम्। यद्यपि शक्तिपदं बलपद चैकार्थतयैव व्यवहारे कोशे च व्याख्यते—तथाप्यवस्थाभेद स्पष्टीकरणार्थमिह पृथगर्थतया परिगृहीतं द्रष्टव्यम्।

क्रिया चेयं क्षणमात्रावस्थायिनी शक्तिजन्या, क्षणान्तरे शक्त्यन्तरेणान्या क्रिया जन्यत इति कारणीभूताया शक्त्यवस्थाया अपि क्षणिकत्वमेवानुमेयं स्यात्। क्षणिकत्वस्वभावायाश्च शक्ते प्रस्वापदशायामपि स्वभावभूत-क्षणिकत्वानपायाद् बलमपि क्षणिकमेव सिद्ध्येत्। यदा हि बलम्, शक्ति क्रियेत्येकस्यैव तत्त्वस्यावस्थात्रयमभ्युपगम्यते—तदा सर्वत्रापि क्षणिकत्व मव्याहतमिति न विशिष्टसाधनमपेक्षते। तस्मात् शक्तौ बले चापि धारा-प्रवाहिकतयैव प्रतीयते स्थिरत्वम्।

क्रियायाश्च यथातिस्वल्पाविभाज्यक्षणस्तत्कालावस्थायिता—तथैवाति-स्वल्पाविभाज्यप्रदेशावगाहोऽपीत्यनुभवसिद्धम्। अङ्गुलिपरिचालन-पादो-त्थापन-पादन्यासादिषु पृथिव्या आकाशस्य वा यावन्तोऽति सूक्ष्मा प्रदेशा. कल्पयितु यत्र प्रभाव स वैयाकरणै कर्मेत्युच्यते। वस्तुत. कर्मक्रियेत्य-कार्थौ शब्दौ, क्रियाप्रधानत्वात्तु उपचारेण कर्मपद तत्र व्यवहरन्ति वैया-करणा। क्रियारूप तत्रैव प्रकटीभवतीति तद्भाव।

कल्पयेरन्—तेषु संयोगविभागार्थं तावत्सूक्ष्मप्रदेशावगाहिन्येव क्रिया-कल्पनीया स्यादित्युक्तं प्राक्। तद्वदेव च परमकारणस्य बलस्यापि परमसूक्ष्मदेशकालावगाह सिद्ध्यति। ननु, अनाद्यनन्ते नित्यविभौ परतत्त्वरूपे भगवति तिष्ठन्ती तच्छक्तिरप्यनन्ता विभुश्च स्यादिति युक्तम्, ब्रह्मण क्वचिच्छक्तिमत्त्वम्, क्वचिच्चाशक्तिमत्त्वम्, कदाचिच्छक्तिमत्त्वम्, कदाचिच्चाशक्तिमत्त्वमिति विवरणस्य क्वापि श्रुतिस्मृत्यादिष्वदर्शनात्, ब्रह्मण स्वगतभेदापत्ते। किञ्च सर्वशक्तिमानपि परमात्मा यदि कदाचित् क्वचिच्छक्तिरहितोऽपि स्यात्, तदा कस्तस्य जीवाद्विशेष इति। सत्यम्, बलपदबोध्याशक्तिरनन्तैव, किन्त्वियान् भेद—ब्रह्माणि सर्वदिग्देशव्याप्त-

रूप परममहत्त्वाख्य परिमाणकृतमानन्त्यम् दिग्वृत्त्यभावाप्रतियोगित्वमिति-यावत्। शक्तौ तु सङ्ख्याकृतमानन्त्यम्, अनन्तानि हि बलानि सर्वत्रापि व्याप्तानीति तस्य दिग्वृत्त्यभावप्रतियोगितानवच्छेदककर्मवत्वमिति यावत्।

एवमेव ब्रह्म त्रिकालाबाध्यमिति कूटस्थनित्यम्। बलन्तु प्रवाहनित्यम्, कदाचिदपि तत्प्रवाहो विच्छिद्यते, प्रत्येकं बलव्यक्तयस्तु परिच्छिन्ना प्रतिक्षणोत्पादविनाशशालिन्यश्च। तत एव 'शक्तय' इति बहुवचनेनापि श्रुतिस्मृतिषु सा व्याख्यायते। शक्तित्वेनानुगमश्च चैकवचनेनापीति। तत एव च कदाचित् सृष्टि, कदाचित्संहार, कदाचिद्ग्रीष्म, कदाचित् शीतमिति सर्वोऽपि भेद उपपद्यते—एकरूपत्वे तु शक्तेर्न जगद्वैचित्र्य सिद्ध्येत्। सर्वस्यापि जगत शक्तिपरिणतिभूतत्वात्। किमन्यत्—यदि ब्रह्मवदेव विभ्वी कूटस्था च शक्तिरभ्युपगम्येत, तर्हि तत्कल्पनैव निरर्थिका स्यात्। अपरिणतायास्तस्या अपि जगदुत्पादकत्वस्य ब्रह्मणा वानुपपत्ति-ग्रस्ततायाः स्फुटत्वात्। तस्मात् प्रवाहरूपैवशक्तिः स्वीकार्या।

यदिद किञ्चन दृश्यते जगद्रूपम्—स सर्वोऽपि शक्तेरेव परिणाम। शक्तेरपि शक्तित्वानपायाद्विकासो वा कथ्यताम्। शक्तिरेव विविधैरूपै-र्भासत इति यावत्। शक्तिश्चैव क्रियारूपेण प्रकटीभवतीति क्रियारूपेण सर्वं जगदित्यपि शक्यते वक्तुम्। सा च क्रिया यद्यपि सूक्ष्मतम देशाव-गाहिनी स्वभावत इत्युक्तम्, तथापि कालिकप्रवाहेषु यथा तस्या नित्यत्व भासते, तथैव दैशिक प्रवाहेण शतशः सहस्रशः सम्मिलितत्त्वेन प्रतीयमानानां महत्त्वमतिमहत्त्वमस्मद्दृष्ट्या परममहत्त्वमपि च भासते, तत एव क्षुद्रत्व-महत्त्वादिकमशाशिभावादि प्रतीयत इत्यर्थ पुरुषनिरूपणे स्फुट स्यात्।

एतदेवालोच्य क्रियामेव मूलतत्त्व मन्यमाना क्रियैकाद्वयवादिन.

श्रमणा क्रियाया क्षणिकतया क्षणिकमेव सर्वमातिष्ठन्ते। श्रमो हि नाम क्रियैव, शारीरक्रियाया- परिणतिरेव श्रम आख्यायत इति त—मुख्यतो स्वीकुर्वन्ति श्रमणा । सिद्धान्तोऽयमति प्रावतन, अतएव ब्राह्मणेष्वपि श्रमणपद श्रूयते, तदेवोररीकृत्य श्री शाक्यसिंहेन बुद्धापरपर्यायेण भगवते-त्यग्यदेतत्। ये तु निराश्रया क्रिया नोत्पद्यन्ते न वा स्थातुं प्रभवन्तीति तदाश्रयभूत ब्रह्मैव मुख्यमातिष्ठन्ते, शक्ति क्रिया वा तस्यैवात्मभूता मन्यन्ते, ते ब्रह्मैकाद्वयवादिनो ब्राह्मणा तत्सिद्धान्तश्च विवृतो रस प्रकरणे।

## बलस्य मायाप्रकृतिरूपता

इद च बल प्रसुप्तमाध्यमेणैकता गत तदात्मभूतमेव तिष्ठति। इदानी तस्य स्वरूपेणैव प्रतिक्षण परिणति, परिणतिस्वभावस्यापरिणमस्य स्थितेरसम्भवात्। तच्च स्वस्वभावेन परब्रह्मण स्वातन्त्र्येणोत्पन्नयेच्छया, कालेन नित्येन तस्यैव परब्रह्मणो रूपेण परिपक्वविपाकोन्मुखप्राणिकर्म समुदायेन प्रेरित वा यदा सर्ग काले जागर्ति तदा शक्त्यादिरूपेण परिणत स्वय परिच्छिन्नमिति स्वाश्रयस्य परब्रह्मणोऽपि परिच्छिन्नता दर्शयति। यथा तरङ्गा अतिस्वल्पदेशावगाहि भङ्ग इति सुविस्तृतस्यापि समुद्र-जलस्य स्वावच्छिन्नता पृथक्कृत्य दर्शयन्ति। यथा वा गृह निर्माणार्थ चित्रभित्त्याद्यनन्तस्याप्याकाशस्य मठाकाशात्पृथक् कृत्येव परिच्छिन्नतामिव दर्शयन्ति। अनन्तमपिमूलतत्त्व बलसम्बन्धात्परिच्छिन्नमिव भासत इति यावत्। अतएव परिच्छेदापरपर्याया मितिरनेन कृतेति माया पदेन बलमिद व्यपदिश्यते। परिच्छेदार्थकान्माधातो साधनार्थे 'या' प्रत्यये मायाशब्द निष्पत्ते। सति परिच्छेद एव सन्निवेश विशेषस्याकार पर्यायस्य रूपस्या-

भिव्यक्तेस्तत्सम्बन्धेनैव च तत्र शब्दविशेषस्य नाम्नः प्रवृत्तिरिति नामरूपयोरेवाव्याकृतयोः सूक्ष्मावस्थाया मायात्वमुक्तं श्रीशंकरभगवत्पादैस्तदनन्यत्वाधिकरणे—"सर्वज्ञस्येश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्वचनीये संसारप्रपञ्चबीजभूते सर्वज्ञस्येश्वरस्य मायाशक्तिः प्रकृतिरिति श्रुतिस्मृत्योरभिलप्येते, ताभ्यामन्यः सर्वज्ञ ईश्वर इति" नामरूपयोरुत्पादिका तत्प्रागवस्थैवात्र मायाभिप्रेताचार्याणाम्। सा च परिच्छेदस्य दर्शयित्री बलरूपैवेति। तत एव नाम रूपयोरविद्याकल्पितत्वं प्रागेवोक्तम्। विद्याविद्ये हि मायाया एव वृत्तिरिति स्पष्टं वेदान्तदर्शनपरिशीलिनाम्। व्याख्यातं च भगवत्पादैरपि प्रथमाध्याय चतुर्थपादारम्भगते—'आनुमानिकमप्येकेषाम्' इत्यादि सूत्रे मायाया अविद्यायाश्चैक्यम्। ततश्च न नामरूपे किञ्चिदभिनवं वस्तु—अपि परिच्छेदिका मायैवेयं पूर्वोक्तरीत्या नामरूपे उत्पादयति, ते नामरूपे अपितु स्फुटं परिच्छेदजनके मायापदेनैव व्यपदिश्येते। लोके हि नामरूपाभ्यामेव माया बोधनीया भवति, न सूक्ष्मावस्था लौकिकानां बुद्धावुपारोहतीत्येव भाष्यकृतां तात्पर्यं स्फुटं सिद्ध्यति।

अज्ञानवासनैव जीवानामनादिप्रवृत्ता अविद्येति मन्यमानैरपि तादृशवासनाश्रया मायाशक्तिरेवेतिमन्तव्यं भवेत्। निराश्रयाया वासनायाः स्थातुमशक्यत्वात्, ब्रह्मणश्च तदाश्रयस्यासम्भवात्। ततश्चाविद्याश्रयमाया जन्यत्वमेव नामरूपयोः पर्यवस्यति।

वस्तुतस्तु परिच्छेदापरिच्छेदाभ्यां चोक्तरीत्या विरुद्धधर्मवम्, वक्ष्यमाणरीत्या ज्ञानापरपर्यायविद्यारूपात्मतत्त्वावरकत्वेन बलमेवेदमविद्याशब्दव्यपदेश्यं शास्त्रेषु। अविद्याया हि भावरूपत्वं महत्यारमद्या साधितं

वेदान्त ग्रन्थेषु। भावरूपता च मायापदव्यपदेश्ये बलरूप एव पर्यवस्यति। अग्रे प्रकर्षेण कार्यकरणाच्च मायैवय प्रकृतिपदव्यवहार्या भवति। प्रकृतिरिति पद प्रकृष्टा कृतिरिति विगृह्यमाण स्वयमेव क्रियार्थक भवति। क्रियाकृतिशब्दयोर्व्याकरणरीत्या भिन्नार्थत्वासिद्धे। क्रियतेनयेति करण-व्युत्पत्तावपि क्रियाया पूर्वावस्थैव सिध्यति, क्रियते-क्रिया निष्पाद्यते आविर्भाव्यते ययेत्यथसमन्वयात्। सा च शक्तिरेवेत्यवोचाम। छेदनादि क्रियासाधनेषु कुठारादिद्रव्येषु तु न क्वापि कृतिशब्दव्यवहार इति प्रकृतेर्द्रव्यत्वमातिष्ठमाना भ्रान्ता एव। "प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते।" "मध्यमे रजसि कृश्चतिशब्दस्तमसि स्मृत।" इत्यादीन्युदाहृत पूर्वाणि ब्रह्मवैवर्तपुराण प्रकृतिखण्डवचनान्यपि सर्जनाख्य क्रियाया पूर्वावस्थारूपतामिव प्रकृते स्फुट ख्यापयन्ति।

## सत्वादि गुणानां क्रियाशक्ति रूपत्वसाधनम्

सांख्यदर्शने सत्वरजस्तमसा प्रकृतिरूपाणा गुणाना यद्विवरण दृश्यते तदपि तेषा क्रियारूपतामवाभिव्यनक्ति। गुणशब्दोऽत्र न वैशेषिकाभिमत-परिभाषित गुणबोधक, अपि तु लोके गुणशब्दस्याप्रधान इति रज्जुरिति चार्थद्वये प्रसिद्धि। तदभिप्रायक एव। सत्वाद्या हि पुरुषस्यैव भोगापवर्ग साधका न तु स्वार्थे प्रवृत्ता इति पुरुष प्रति गुणीभूतत्वाद् गुणा आख्याता।

यद्वा पुरुषस्य बन्धनार्थ रज्जुत्वबुद्धि सेयमेभिर्गुणैरेव सृज्यत इति रज्जुरूपतयापि रूपकेण व्याख्यातु शक्यत इति सर्वमेतत्तत्त्वकौमुद्यां श्री वाचस्पतिमिश्रै सूत्रभाष्ये विज्ञानभिक्षुभिश्च स्पष्टीकृतम्। तत्र—

प्रीत्यप्रीतिविषादात्मका प्रकाशप्रवृत्तिनियमार्था।
अन्योऽन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणा॥

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलं च रजः ।
गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥

इति हि गुणानां विवरणं सांख्यकारिकायामुपलभ्यते। प्रकाशरूपं सत्त्वम् प्रवृत्ति रूपं रजः, आवरकं च तमः इति गुणस्वरूपनिर्देशोऽत्र कृतः। प्रकाशप्रवृत्तिनियमो अर्थः प्रयोजनं येषामिति व्युत्पत्तेः। प्रयोजनता चैषां पुरुषस्य भोगापवर्गार्थतया वदन्तीति सांख्यानां परिभाषा। तत्र प्रवृत्तिरूपस्य रजसः क्रियारूपतानुक्तापि सिद्धैव, प्रवृत्तिक्रियाशब्दयोरैकार्थ्यात्। प्रवर्त्यः तेनेनेति व्युत्पत्त्या क्रियासाधनत्वमस्यति यदि कश्चिद् विवृणुयात्, तद्वारणाय 'चलं च रजः' इति चलनरूपता द्वितीय कारिकायां तस्य स्फुटीकृता। उपष्टम्भकपदमपि श्रीवाचस्पतिमिश्रैस्तत्त्वकौमुद्यामेव व्याख्यातम् यत् सत्त्वतमसी स्वयमक्रियतया स्वकार्यं उत्साहप्रयत्नं कार्यते इति। तस्यायमाशय, क्रिया हि नाम परत्रैव संक्रान्तावभासते इति पूर्वमेव क्रिया स्वरूपविवरणं उक्तम्। ततः स्वयं चलनरूपं रजः सत्त्वतमसोरप्युपसंक्रम्य ते अपि चालयति परिणत्या स्वकार्ये प्रवर्तयतीति तदुपष्टम्भकमुच्यते। एवमेव सत्त्वस्य प्रकाशरूपताप्रकाशकता चेत्युभयम्, तमसः आवरणरूपता, आवरकताचेत्युभयं च व्याख्येयम्। स्वयं प्रकाशः, अन्यत्रोपसंक्रान्तस्तु अन्यस्य प्रकाशक इति, स्वयमावरणम् परस्य त्वावरकमित्युपपत्तिः संभवात्। अतएव दीपः प्रकाशते, दीपः प्रकाशयति, सविता प्रकाशते, सविता प्रकाशयतीति द्वयमप्युपपद्यते। अकर्मिका क्रिया शक्तिरूपैवेति प्राच्यास्यातम् ततः प्रकाशत इति शक्तिरेव प्रतीयत इत्यालोच्यम्। ये तु प्रकाशत इति तिङ्र्थतया तत्रापि व्यापारः प्रतीयत एवेत्यागृह्णीयुः, तैरेवमालोच्यम् परं प्रकाशनं [illegible] प्रकाशयतीति णिचाभिधीयते, तर्हि दीपे सूर्ये वा स्वावस्थि-

स्वर्तिरिक्त कोनामास्ति स्वप्रकाशानुकूलो व्यापाराय सविता प्रकाशत इत्यादावभिधेय स्यात् । अवस्थितिस्तु सत्तारूपा स्वरूपानतिरिक्ता शक्तिरेव । चक्षुर्विषयीभवनमितिचेच्चक्षुर्व्यापार एव, न तु सूर्यस्य दीपस्य वा कोऽपि व्यापार, विषयीकरण चक्षुष, विषयीभवन तु दीपादेरित्यपि वाङ्मात्रम् । विषयीकरणातिरिक्तस्य विषयीभवनरूपस्य कस्यापि व्यापारस्य दर्शयितुमशक्यत्वात् । अवस्थितिरेवोपचारेण व्यापार-रूपतया तिङर्थनिर्वाहाय कल्प्यत इति चेत् काम कल्प्यताम् । वस्तुतस्तु शक्तिरेव तत्राभिधेयेति प्रकाशशक्तिरूपत्वं सत्वस्य फलति । इद च ईक्षत्यधिकरणे भाष्यकृद्भिराचार्यपादैरपि सूचितम् "असत्यपि कर्मणि सविता प्रकाशते" इति व्यपदेशदर्शनात् "सवितृप्रकाशवद् ब्रह्मणो ज्ञान-स्वरूपनित्यत्वे ज्ञानसाधनापेक्षानुपपत्ते" इत्यादिना । अत्र हि दृष्टान्त-विधया सवितु प्रकाशस्वरूपतोक्त्या स्वरूपभूतशक्तिरूप प्रकाश इत्येवोक्त भवतीति । प्रकाशक्रियावरणरूपतयैव गुणानां शुक्ल रक्त कृष्णरूपता-ध्येयाम् । "अजामेकां लोहितशुक्लकृष्णाम्' इति श्रुतौ बहुत्र पुराणादिषु चोपचरिताप्युपपद्यते । सत्वरूपस्य प्रकाशस्य शुक्लतया, तमस आवरकस्य कृष्णतया, मध्ये स्थितस्य प्रवृत्तिरूपतया, सघर्षरूपस्य च रजसो रक्ततया तदाकारस्याञ्जस्येनोपपत्ते । प्रकाशक्रियास्थितिशील भूतेन्द्रि-यात्मक भोगापवर्गार्थं दृश्यम् (योगसू० २।१८) इति योगसूत्रे तु क्रियाशब्द एव रज स्वरूपबोधनाय स्पष्टमुपात्त । क्रियास्थितिशीलमिति तु चैतन्य-स्वभाव पुरुष इत्यादिवद्विकल्पज्ञानाश्रयो निर्देश । क्रियादिक शील स्व-भावो यस्येत्युक्त्या क्रियास्वभावस्य क्रियात्वमुक्त भवतीति । अस्तु वा क्रिया स्वभावपदेन क्रियाया पूर्वावस्थारूपाशक्ति, तथापि नास्माक विरोध: ।

स्पन्दितक्रियाणामेकरूपतायाः उक्तत्वात् । सत्वमपि प्रकाशरूपतया ख्यातक्रियैव । अभिव्यञ्जनरूपा क्रियैव हि प्रकाशशब्देनाख्यायते । चाभिव्यञ्जनं स्वस्य परस्य वेत्युभयमप्यनान्तर्भवति । प्रकृतिस्वरूपा त-स्य प्रकाशस्य हीद तत्त्वम् । यावच्च क्रियानुल्वणा भवति, तदीयाधारा धिश वेगवती भवति, तावत्सा ज्ञानरूपं मूलतत्त्वं नावृणोतीति तत्र न स्वरूपं प्रकाशते—मन्दमन्दक्रियावति सरसीव सूर्यादिप्रतिबिम्बम् । ञ्चिच्चाल्यमाने आदर्श इव च मुखादिप्रतिबिम्बम् । उल्वणायां तु थाया वेगवत्या तन्न प्रकाशत इति सत्वस्य लघुत्वं प्रकाशरूपता चोच्यते, रूप प्रतिबिम्बेन सत्वमपि प्रकाशरूपतां गतमिति । सत्वस्यैव परिणति-तिरूपं ज्ञानमिति स्पष्टं वेदान्तग्रन्थेषु । वेगाभावरूपमेव च लघुत्वम् । त्व हि नामाकर्षणक्रियाग्रहणयोग्यता । आकर्षणपरिणतिरेव पतनमिति ष्टमुक्तं ज्योतिर्विदामग्रेसरैः श्रीभास्कराचार्यैः सिद्धान्तशिरोमणौ—

आकृष्टिशक्तिश्च मही तया यत्,
खस्थं गुरु स्वाभिमुखं स्वशक्त्या ।
आकृष्यते तत्पततीव भाति,
समे समन्तात् क्व पतत्वियं खे ॥ —इति ।

निराधारां पृथिवीमनुक्षणं नीचैः पततीति बौद्धानां खण्डनमपि श्री-भास्कराचार्यैः कृतम् । तत्रैव युक्तिः प्रदर्शिता यत्पतनं नाम न कस्यापि वस्तुनः स्वाभाविकी क्रिया, अपि तु आकर्षणजन्या । उपरि प्रक्षिप्त लोष्टादि, क्षेप्तुर्हस्तेनोत्पादितायाः क्रियायाः समाप्तौ पृथिवीगतया आकर्षणशक्त्या आकृष्यमाणं पतद् दृश्यते, न तु स्वभावतः । इदं च पृथिव्या आकर्षणं स्वसजातीये गुरुणि द्रव्ये लोष्टादावेव कार्यं करोति,

न तु लघुनि तृणादौ सूर्यचन्द्रकिरणादिषु वा तस्याकर्षणग्रहणयोग्यता-नास्तीति । चन्द्रतारादयश्च न पृथिव्या सजातीयाः, अपितु तेजोरूपा इति न तत्रापि पृथिव्या आकर्षणं प्रसरति । पृथिव्यास्त्वाकर्षकं न किमपि सजातीयमितः परितो विलोक्यते । इयं हि समन्तात् समे आकाशे स्थिता, आकाशे च नाकृष्टिशक्तिरिति क एनामाकर्षेत । कुतश्च पतनमस्याः संभवे-दिति तदभिप्रायः । शेषकूर्मादिकं तु पृथिव्या विधारकं नैतदभ्युपगच्छतीति अत्रत्येतावदेवावधातव्यम् यदाकर्षणग्रहणयोग्यतैवोक्तरीत्या गुरुत्वम् । तद्विरोधी च शक्तिविशेष एव लघुत्वमिति तदपि क्रियाया एव पूर्वावस्थारूपम् । श्रीवाचस्पतिमिश्रैरपि कार्योद्गमनहेतुधर्मो लाघवम् गौरवप्रतिद्वन्द्वि, यतोऽग्रे ऊर्ध्वगतिर्भवतीत्येव व्याख्यातम् । तमसो गुरुत्वमावरकत्वं च यदुक्तम्--तत्र गुरुत्वस्याशक्तिरूपता व्याख्यातैव । आवरणमपि वैज्ञानिकदृष्ट्या क्रियारूपमेव । एका हि प्रबलक्रिया यदा स्वसमानबलेन क्रियान्तरेण संरुध्यते, तदा द्वयोः क्रिययोर्विलोप इव दृश्यते । समबलेन पुरुषद्वयेन युगपद् विरुद्धयोर्दिशोः समाकृष्टा रज्जुर्नाणुमात्रमपि चलतीति प्रत्यक्षं दृश्यते । तत्र न च रज्जुरक्रियेति शक्यं वक्तुम्, पुरुषद्वयेनोत्पादिता हि क्रिया कथमेना न चालयेत । श्रमश्चाधिकाधिकं क्रमेणपुरुषद्वयेनाप्यनुभूयते--यदि न ताभ्यां क्रियोत्पादिता स्यात्, तर्हि कथं शक्तिक्षयरूपश्रमस्ताभ्यामनुभूयेत । तस्मात् प्रतिक्षणं सा रज्जुः पूर्वदिगवस्थितेन पुरुषेणाकृष्टा पूर्वस्यामपि दिशि प्रसरति, तस्मिन्नेव क्षणे पश्चिमदिगवस्थितेन पुरुषान्तरेणाकृष्टा तावदेव पश्चिमस्यामपि दिशि प्रसरतीति युगपद् विरुद्धदिग्द्वयप्रसारणादेकत्रैव स्थिता दृश्यते, एवं विषस्थल एव प्रतिबध्यप्रतिबन्धकभावो लौकिकैर्नैयायिकैश्च व्यवह्रियते । वस्तुतो न तस्यां रज्जौ

क्रियाया अभाव, अपितु विरुद्धदिग्गमनरूपा अत्युल्बणक्रिया। एव विषमेव रजसोत्पादिताया क्रियाया क्रियान्तरेण तदुत्पादितेनैव नियमन तम इत्युच्यते। अन्यथा कथ सत्वतमसो अक्रिये' इत्यक्रियत्वेनोक्तस्य तमस आवरकत्व सम्भवेदिति सुसूक्ष्ममालोच्यता सुधीभि। तदित्थमत्युत्कटक्रियारूप तम, तच्चोक्तरीत्यैकदिग्गमनरूप चलनमपि रजोरूपमावृणोति, अत्युत्कटक्रियया प्रकाशोऽप्युक्तरीत्या न भासते--तरङ्गमालाकुलिते समुद्रे चन्द्रतारादिप्रतिबिम्बमिवेति सत्वस्यावरकमिदमुभयोविरोधितया गण्यते। एव चारम्भदशावच्छिन्नाक्रिया, कुर्वद्रूपतामालम्बमानैव प्रथमक्षणावच्छिन्ना शक्तिर्वा सत्वम्। मध्या दशामनुप्राप्ते अनुभवविषयता गता सा रज अत्युत्कटतया परस्परोपघातेन विलीनेवानुभवपथादतिक्रान्ता आवृतेतिव्यवह्रियमाणा तु तम इति एवस्या एव क्रियायासम्मूलभूताया शक्तेरवस्थाविशेषा इमे सत्वादिगुणा—नत्वेकान्तत पृथग्भूता इति सुनिपुण भाव्यताम्।

प्रकृतिपुरुषसयोगे पुरुषप्रतिबिम्बभूतस्य प्रकाशस्य क्रमिक ह्रासमभ्युत्थानद व्याख्यातम्। क्रमिकविकाशरूपता त्वभिलक्ष्येदमपि व्याख्यातु शक्यते—यत् प्रलयकाले तमसा आवृते सत्वरजसी, सृष्ट्यारम्भे प्रकृतिक्षोभरूप आवरणभङ्गो भवति, सोऽय क्षोभ कुतो जायत इत्यत्र बहूनि मतानि प्रकरणस्यास्यारम्भे सकेतितानि। स्वभाव एवाय प्रकृतेर्गुणत्रयरूपाया, स्वरूपपरिणामाख्य, विरूपपरिणामाख्य आवरण च, तदेतदुभय गुणस्वाभाव्यादेव प्रवर्तते, न तत्र कारणान्तरमिति साख्यानामभ्युपगम।

परमपुरुषस्य भगवत स्वातन्त्र्येणोद्भूतासिसृक्षा परिणति जनयतीति आगमिका मन्यन्ते सम्प्रदायाचार्याश्च। इय त्रिगुणा न

प्रकृतिपरिणतिरूपायाबुद्धेर्वृत्ति । बुद्धे प्रकृतिक्षोभात्परमुत्पद्यमानत्वात्, अपितु भगवत्यस्ति स्वातन्त्र्यरूपाशक्ति, तस्यैव सा वृत्तिरिति । अतएव सिसृक्षारूपा भगवत इच्छा मूलशक्तेरिच्छायारूपतयैव निरूपिता आगमेषु, नतु सा महामायाया मायाया प्रकृतेर्वा परिणति, तासां सर्वासामप्र उत्पद्यमानत्वात् । अपितु भगवति परमशिवे यत्स्वातन्त्र्यम् सैव मुख्याशक्ति, तस्या विकास इति तच्छायारूपैव इच्छाशक्ति, तस्या च परमशिवस्य प्रतिबिम्बरूपेण प्रवेश सैवाज्ञानशक्ति । नित्य ज्ञान साक्षाद्भगवद्रूपम्—यथास्माभीरस्म प्रकरणेव्याख्यातम् । तस्यैवेच्छाया प्रतिबिम्बनम्, अर्थात् स्रष्टव्यपदार्थपर्यालोचनमिह प्रतिबिम्बरूप ज्ञानम् । तज्ज्ञानशक्तिरूपणेह व्याख्यायते ज्ञाने इदमेतत् किमित्यादि विशेषेणरूपेण प्रवेश । अर्थात् तस्य ज्ञानस्य तत्तद्रूपेण स्फुरणन्तु क्रियाशक्तिरिति तिस्रोप्येता इच्छाज्ञानक्रियाशक्तयो मूलशक्तेरेव परिणतय आगमशास्त्रे व्याख्यायन्ते । महामायामायायास्तु परत उत्पत्तौ-जगत्तत्त्वान्तर्गता ।

इयमेव प्रक्रियाश्रीवल्लभाचार्यपादै स्त्रीमच्छुद्धाद्वैतदर्शनेऽनुसृता । प्रकृतिक्षोभकारणेष्वियमेव बुद्धौ सम्यगुपारोहति ।

प्रकृतौ क्षोभइति तु सर्वेषामप्यभिमतम् । जागरणरूपप्रकृतिक्षोभे तमसोऽपसारणे आवरणभंगे क्रिया प्रसरति इति तमसोऽनन्तरं रज, सा च क्रिया स्वभावादेव उत्कटता शान्तता चालम्बते, सर्वास्वपि क्रियासु तथा दर्शनात् । यदा हि सा उपशान्तेव भवति तदा पूर्वोक्तरीत्या पुरुषबिम्बेन प्रकाशो भवतीति रजसोऽनन्तरं सत्वमिति उभयथापि सम्भवति, नैषां पूर्वापरीभावो नियत । विकासह्रासावपि दृष्टिभेदमात्रमित्यपि स्थाने स्थाने व्याख्यायते ।

तदित्थं वैज्ञानिकप्रक्रियया क्रियाशक्तिरूपता गुणानां व्याख्याता । तत एव कारिकोक्तम योऽन्याभिभवाश्रयजननमिथुनवृत्तित्वमुपपद्यते, तत्र तत्त्वकौमुद्यामुद्धृतानि—

अन्योऽन्य मिथुना सर्वे सर्वे सर्वत्र गामिन ।
रजसो मिथुन सत्व सत्वस्य मिथुनं रज ।
तमसश्चापि मिथुने त सत्वरजसी उभे ।
उभयो सत्वरजसोर्मिथुन तम उच्यते ।
नैषामादि सम्प्रयोगो वियोगोवोपलभ्यते ।

इति पुराणवचनानि, तट्टीकायां श्रीबलरामोदासीनैरुद्धृतानि देवीभागवते लभ्यमानानि—"अन्योन्याभिभवाच्चैते विरुध्यन्ति परस्परम्, तथा योन्याश्रया सर्वे न तिष्ठन्ति निराश्रया ।" "यथा स्त्री पुरुषश्चैव मिथुन च परस्परम् । तथा गुणा समायान्ति युग्मभाव परस्परम् ।" इत्यादीनि वचनानि सगच्छन्ते । न ह्येकान्ततो भिन्नात्मकेन विना परस्परानवस्थानम्, विरोधेऽपि सतत परस्पराश्रयत्व चेत्यादि घटेत । कदापि पृथक्त्वानुपलब्ध्या एकत्वमेव पदार्थाना साधयन्ति दार्शनिका, तद्रीत्याऽत्रा-

प्येकत्वमेव सिध्यति सत्वादीनाम्। एकस्या एव प्रकृतिरूपाया शक्तेर-
वस्थाभेदा इमे इत्यभ्युपगमे हि अवस्थाना सूक्ष्मरूपेण शक्तौ सत्कार्यवादे
सततमवस्थायित्वादुद्भवे परस्परविरोधित्वाच्चान्योन्यमिथुनत्वमन्योन्याभि-
भवश्चेत्युभयमप्युपपन्न भवति। अवस्थाया अवस्थावता सह भेदाभेद-
दृष्टिभेदे न च "सत्वादिगुणवती प्रकृतिः, सत्वादिगुणाएव प्रकृति"
इत्युभयमप्युपपद्यते तत तत्र निरूप्यमाणम्, भेददृष्ट्या सर्वेषा प्रकृत्याश्रित-
त्वम्, अभेददृष्ट्या तु अन्योन्याश्रितत्वमित्युपपन्नम्। क्रियावस्थाया
पूर्वमारब्धा लब्धोक्रियैव क्रमेण वेगरूपतामप्रक्रियान्तरेण प्रतिबद्धोपरुद्धता
गच्छतोरन्योन्यजननमपि कारिकायामाख्यातम्। यत्तु "अन्योन्य
जननम्", अन्यापेक्षयान्यस्य जनकत्वम्, सत्व हि रजस्तमसो अपेक्ष्यव
प्रकाश जनयति, रजोऽपि सत्वतमसी अपेक्ष्यैव प्रवृत्तमित्यादि क्षपण
महद्भिर्व्याख्यायते—तत्रेदमेव वक्तव्यम्-यद् अन्योन्य मिथुनवृत्तित्व-
कथनेनैवेद सिद्धमित्यन्योन्यजननकथन पुनरुक्त स्यात्। "अन्योन्य
मिथुनवृत्तय" इत्यविनाभाववासिन इत्यर्थकतया यदा सत्वकौमुद्या
व्याख्यातम्, सदापरस्परमविनाभूताना स्वकार्यजनने परापेक्षेति नैव वक्तव्य-
मपेक्षते। यत्तु स्त्रीपुसयोरिवान्योन्यमिथुनवृत्तिता व्याख्यायते—तत्रोक्तानि
पुराणवचनानि नोपपद्यन्ते—तत्र हि द्वयोर्द्वयोरपि तृतीयेन मिथुनत्व-
मुक्तम्—"नैषामादि सप्रयोगो वियोगोवोपलभ्यते" इत्यपि चोक्तम् तदेत-
द्भिन्नयोर्नैवोपपद्यते—भिन्नयो सयोगस्यानादित्वासभवात् वियोगाभाव-
स्याप्यसभवाच्च। तस्मादविनाभावरूपेणैव व्याख्यान युक्ततरम्। देवी-
भागवतोक्त स्त्रीपुसदृष्टान्तस्तु यथा पुरुषशरीरे स्त्रीपुसयोरवयवाना
परस्परमविनाभूतत्वेन मिथुनीभाव, तथैव गुणानामविनाभाव, इत्येव-

व्याख्येय. । पद्यस्यान्ते 'युग्मभावम्' इति स्वारस्यात्, अग्रे पठितानां पद्यानां स्वारस्याच्चेति । अन्योन्याश्रया इत्यपि च "यदपेक्षा यस्य क्रिया स तस्याश्रय." इत्येव तत्त्व-कौमुद्यां व्याख्यातम् । ततश्चान्योन्याश्रया, अन्योन्यजननाः, अन्योन्यमिथुनाः, इति त्रीण्यपि विशेषणानि एकस्यै-वार्थस्य बोधकानीति पुनरुक्तानि स्युः । "त्रिगुणमविवेकिविषय." इति साधर्म्यवचनेन अविवेकित्वमपीत्यमेव व्याख्यायते, अन्योन्याश्रयवृत्तय इति विसदृशपरिणामे परस्परापेक्षोक्ता । अन्योन्यजननवृत्तयः इति तु सदृशपरिणामेऽपि परस्परापेक्षेत्यादि" व्याख्यानमपि "स्थितस्य गति-श्चिन्तनीया" इति न्यायमेवानुसरति, न तु मनस्तोषकरम्, एकेनैव विशे-षणेन सर्वमपेक्षाया बोधितायां पौनरुक्त्यस्य दुष्परिहरत्वात्, कारिका-न्तरैस्तादृशार्थस्य सर्वथाप्यसिद्धत्वाच्चेत्यस्मदुक्तप्रक्रियैव कारिकायां पुराणवचनानां च व्याख्यानम् न्याय्यमिति विवेचयन्तु सुधियः । तत्त्वकौमुद्या-मपि च 'अन्यतमोऽन्यतमं जनयति' इतिपाठ क्वचिदुपलभ्यत इति टीका-कृद्भिःश्रीबालरामस्वामिभिरुक्तम् । तैः स पाठो अनादृत इत्यन्यदेतत् । एवं परस्परजनने गुणानां नित्यत्वं भज्येत, गुणरूपैव च साङ्ख्यमते प्रकृति-रिति तस्या अप्यनित्यत्वं प्रसज्जेतेति तु न शंकनीयम् । प्रवाहनित्यताया एव प्रकृतौ गुणेषुचेष्टत्वात् । उद्भवतिरोभावशालिन्याः कूटस्थनित्यत्वा-संभवात् । अन्योन्यमुत्पादकत्वेऽपि प्रवाहनित्यताया न क्षति सततमेकोऽ-परमुत्पादयन्नेवास्त इत्येव हि प्रवाहनित्यता । यथाचास्माभि. क्रियायाः शक्तेर्वा अवस्थाविशेषा गुणा आख्याता. तथा प्रवाहनित्यतास्फुटैवेत्यालोच्यं सुसूक्ष्मम् । क्रियावस्थायामपि च सर्वमेतदुपपद्यते । यद्यपि 'कर्म-कर्म साध्यं न विद्यते' इत्यादिना भगवता कणादेन वैशेषिकसूत्रेषु क्रियायाः

क्रियान्तर जनकत्व क्रियान्तराश्रयत्व च निराकृतम्, तदेतत्पृथक् पृथग-वस्थितस्य क्रमश एव स्वामाज्य तेन विवृतम्, आश्रये स्थिता धारावाहित्व प्राप्ता तु क्रिया क्रियान्तर जनयत्यपि आश्रयाश्रयिभाव परस्परविरोधित्वन परस्पराभिभावकतामपि च प्रयातीति स्फुट पूर्वोपदर्शिते समबलपुरुषाकृष्ट रज्जुदृष्टान्तेऽनुभूयते । क्रियया वेग उत्पाद्यते, वेगस्तु पुन क्रियान्तर जनयति इति तेनापि भगवता तथैवोररीकृतम् । वेगश्चाय क्रियाया न पृथग्भूत, अपि तु क्रियाया एव धारावाहित्वेरयनुपद विशदीकरिष्याम । ततश्च धारावाहित्वतो सत्ताया क्रियायामन्योन्यजनकता क्रियया वेग, वेगेन क्रियेत्यादिरूपा, समबलाकृष्टरज्जुदृष्टान्ते पूर्वोक्तेऽन्योन्याभिभव । वस्तुत एकस्यैव धारावाहित्वेन स्थितत्वाच्चान्योन्यमिथुनत्वमिति सर्वं युक्तावुपारोहति ।

## ज्ञानसुखादीनां क्रियारूपता

'प्रीत्यप्रीतिविषादात्मका" इति च साख्यकारिकायामध्यात्म रूप गुणाना सर्वसत्वमुक्तम् । ज्ञानेच्छासुखदु खाद्या सर्वा अपि मनोवृत्तयो मनोव्यापाररूपा मानस्य क्रिया एव । यत्तेनम्—तत्तद्रूपेणाविर्भवनमेव वृत्तिरिति न क्रियात्वमतिक्रामति । मनसो व्यापार एव मन परिणाम, सैव च मनोवृत्तिरूप ज्ञानम् इच्छाद्याश्च सर्वा अपि मानस्य क्रिया । यद्यपि समन्वयाधिकरणे श्रीशाकरभगवत्पादै ननु ज्ञान नाम मानसी क्रिया, न, वैलक्षण्यात् । क्रिया नाम सा, यत्र वस्तुस्वरूपनिरपेक्षैव चोद्यते, पुरुष-व्यापाराधीना च । यथा—"यस्यै देवतायै हविर्गृहीत स्यात्, ता मनसा ध्यायेद् वषट् करिष्यन्" इति सन्ध्या मनसा ध्यायेद् । इति चैवमादिषु । ध्यान चिन्तन यद्यपि मानसम्, तथापि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तु

शक्यम्। पुरुषतन्त्रत्वात्। ज्ञानं तु प्रमाणजन्यम्। प्रमाणं च यथाभूतवस्तुविषयम्, अतो ज्ञानं कर्तुमकर्तुमन्यथा वा कर्तुमशक्यम्। केवलं वस्तुतन्त्रमेव तत्, न चोदनातन्त्रम्। नापि पुरुषतन्त्रम्, तस्मान्मानसत्वेऽपि ज्ञानस्य महद्वैलक्षण्यम्। यथा च "पुरुषोवाव गौतमाग्निः" योषावाव गौतमाग्निः। इत्य योषित्पुरुषयोरग्निबुद्धिर्मानसी भवति, केवल चोदना जन्यत्वात् क्रियैव सा, पुरुषतन्त्रा। तद्प्रत्यक्षविषयवस्तुतन्त्रैवति ज्ञानमेव तत्, न क्रिया। एवं सर्वप्रमाणवस्तुषु वेदितव्यम्, इति ज्ञानस्य क्रियारूपता सयुक्तिं सुस्पष्टं निराकृता, तथापि वस्तुयाथात्म्यज्ञानस्य पुरुषाधीनत्वाभावेन न विधेयता सम्भवतीति ज्ञानस्य विधेयता ये वदन्ति पूर्वमीमांसकाः, तच्छेषतया च ब्रह्मणः क्रियाशेषत्वमेवाभिप्रयन्ति, तेषां निराकरण एवाचार्याणामाशयः, न तु ज्ञानस्य क्रियारूपताखण्डने। चित्तवृत्तिरूपस्यैवोपासनस्य क्रियात्वं तु तैरप्यभ्युपगतमेव। तथा च मनोवृत्तिरूपत्वाविशेषेऽपि ध्यानमुपासनम् वा क्रिया, वस्तुयाथात्म्यज्ञानं तु न क्रियेति वक्तुमशक्यमेवति। तस्मात्पुरुषतन्त्रत्वाभावबोधन एव तात्पर्यमवसेयम्। तावतैव विधिविषयत्वं निराकृतमिति। व्याख्यातं च तत्रैव मायतमैः सर्वैर्व्याख्याकृद्भिः। "अतोवस्तुविषयस्य ज्ञानस्य क्रियात्वेऽपि न चोदना जन्यत्वम्, न वा पुरुषतन्त्रत्वम्, अपितु प्रमाणवस्तुपरतन्त्रत्वम्" इति पञ्चपादिकायां श्रीपद्मपादाः मानसक्रियात्वेनाविशेषेऽपि ज्ञानध्यानयोर्गोबलीवर्दन्यायेन भेदः इत्यभिप्रायः इति भाष्यभाव प्रकाशिकायां श्रीचित्सुखमुनयः। सत्यं ज्ञानं मानसी क्रिया, नत्वियं ब्रह्मणि फलं जनयितुमर्हति, तस्य स्वप्रकाशतया विदिक्रियाकर्मत्वानुपपत्तेरित्युक्तम्। तस्माद् ब्रह्मज्ञानं मानसीक्रियापि न विधिगोचरः इति

-भामत्या श्रीवाचस्पतिमिश्रा । यदि तावत् प्रमाणजन्यज्ञानस्य कामादेरिव मन परिणाममात्रत्वात् मानसक्रियात्वमभिधीयते, तदिष्टमेव, अस्माकमपि ब्रह्माकारान्तःकरणवृत्तेस्तत् परिणामत्वाभ्युपगमात्। न त्वेतावता भवदभीष्ट सिद्धि, तस्या कामादिवदपुरुषतन्त्रत्वेनाविधेयत्वात्, अन्यथा कामादेरपि तत्प्रसगाच्च इति वार्तिकम्। एतदग्रे वार्तिककृता य उपसनादेर्ज्ञानत्वमेव नेच्छन्ति, तेषां सपरिकर खण्डन कृतम्। अन्ते च उभयोरपि 'मन परिणामत्वेन क्रियात्वात्' इत्युपसहृतम्। तस्माद् ज्ञानमेव तत्, न क्रिया इति भाष्याक्षराणा न विधेया क्रिया इत्येव तात्पर्यं सर्वैर्भाष्यव्याख्यातृभिर्निरूपितम्। "ज्ञानजन्या भवेदिच्छा इच्छाजन्या कृतिर्भवेत्, कृति जन्य भवेत् कर्म" इति नैयायिकनिरूपितस्यानुभवसिद्धस्य ज्ञानेच्छाप्रयत्नक्रियाणा कार्यकारणभावक्रमस्य वस्तुयाथार्थ्यज्ञाने नास्ति सम्भव, क्रियाजनक प्रयत्नजनिकाया इच्छाया अपि जनके ज्ञाने कृतिजन्यक्रियारूपता न स्वप्नेऽपि सम्भावयितु शक्येति। कृतिजन्यत्वमेव यथार्थज्ञानस्य भाष्यकृद्भिर्निराकृतम्। कृतिविषय एव च विधि सम्भवतीति न विधेस्तत्रप्रवेश इत्येतावदेव भाष्यतात्पर्यम्। न तु ज्ञानस्य क्रियात्वमेव नास्तीति। स्वयमेव भाष्यकृद्भि ईक्षत्यधिकरणावतरणे नहि सर्वदा सर्वविषयज्ञान कुर्वदेव ब्रह्म वर्तते तथा ज्ञानस्य नित्यत्वे ज्ञानक्रिया प्रतिस्वातन्त्र्य ब्रह्मणो हीयेत। अथानित्य तदिति ज्ञानक्रियाया उपरमेतापि ब्रह्म, तदा सर्वज्ञानशक्तिमत्त्वेनैव सर्वज्ञत्वमापतति इति साख्यपूर्वपक्षोपपादनेन सात्त्विकवृत्तिरूपस्य ज्ञानस्य क्रियात्व शक्तित्वं च व्यवहृतम्। न च तत्सिद्धान्तोपपादने खण्डितम्, प्रत्युत नासाक्षिका सत्त्ववृत्तिर्जानातिनाभिधीयते, न चाचेतनस्य प्रधानस्य साक्षित्वमस्ति। असत्यपि कर्मणि सविता प्रकाशते इति कर्तृत्वव्यपदेश-

दर्शनात् । एवमसत्यपि ज्ञानकर्मणि ब्रह्मणस्तदैक्षतेति कर्तृत्व व्यपदेशोपपत्तेर्न वैषम्यम् इत्यादिना ज्ञाननिरूपितकर्तृत्वकर्मत्वाद्याचक्षाणैर्वृत्तिरूपज्ञानस्य क्रियात्वमुररीकृतमेव, नहि क्रियात्वाभावे तन्निरूपितकर्तृत्वकर्मत्वाद्युच्येत । मत्सम्बन्धाच्च ब्रह्मण्यपि वृत्तिसम्भवः, सा मायायामिमे समुपन्यस्तेति । यद्वा प्रमाणेन जनिता मनोवृत्ति: सत्येति तत्र मुख्यं ज्ञानं ब्रह्मरूपं झटिति प्रतिबिम्बति-सत्यस्वरूपत्वाद् ब्रह्मणः । तथा च इयं मनःपरिणतिरूपावृत्तिः, अथ चेदानीं तत्प्रकाश इति भेदग्रहस्य न तत्र सम्भवः, सूक्ष्मत्वात् कालस्य, सत्यपक्षपातित्वाच्च धियाम् । तेन ज्ञानरूपेणात्मना भेदाग्रहात् इदं ज्ञानमेव, न वृत्तिरूपा क्रिया तत्र पृथग् भासत इत्यपि भाष्यतात्पर्यमुन्नेतुं शक्यम् । उपासनादौ तु पूर्वं विधिजन्ययथार्थज्ञानम्, तदनु एवं कुर्यामितीच्छा, ततः प्रयत्नेन तथाविधवृत्तिसम्पादनम्, ततस्तत्र मुख्यज्ञानप्रतिबिम्बनमिति, तत्र क्रियात्वमव्याहतमेव । मुख्यं हि ज्ञानमात्मस्वरूपमेवेति मूलतत्त्वस्य ज्ञानरूपनिरूपणे प्राक्प्रत्यपीपदाम । तदेव यथार्थज्ञाने, झटिति भासत इति मनोवृत्तेरपि तत्पार्थक्याग्रहणान्न क्रियात्वमवधीयते ।. इदमपि ईक्षत्यधिकरणे "नासादिवा सत्ववृत्तिर्जानातिनाभिधीयते, नचाचेतनस्य प्रधानस्य साक्षित्वमस्तीति" भाष्यकारैरभिव्यञ्जितमेव । साक्षिचैतन्यं तत्र झटिति प्रतिबिम्बतीति तात्पर्यात् । इदमेवाभिलक्ष्यागमशास्त्रीये वरिवस्यारहस्ये 'इच्छामि, जानामि', इत्यादावुत्तमपुरुषान्तर्भासमानं, स्फुरणान्वयि ज्ञानमेव प्रकाशविधं ब्रह्म इति श्रीभास्कररायैः "स जयति महान् प्रकाशः" इति प्रथम पद्यव्याख्यान एवोपन्यस्तम् । वैयाकरणनैयायिकोक्तदिशा ज्ञानेच्छानुकूलो व्यापारः, तदनुकूलाकृतिर्वा आख्यातार्थं ज्ञाधात्वादिधात्वर्थो वा न सम्भवति, ज्ञानेच्छयोः कृतिजनकत्वेन कृतेर्व्या-

पारस्य वा तज्जनकत्वासम्भवात् । विशेषतश्चोत्तमपुरुषे, नहि पचामीत्यादौ पाकानुकूलं व्यापारमनुतिष्ठामीत्यादिवज्ज्ञानायेच्छायै वा व्यापारमारभे—इति कस्याप्यनुभवोऽस्ति, ज्ञानस्येच्छाया वा आविर्भावानन्तरमेव 'जानामि' 'इच्छामि' इत्याद्यनुभवो जायते । नचाख्यातके एव ज्ञानेच्छे प्रतीयेते इत्यपि वक्तुं शक्यते, आख्यातान्तशब्दप्रयोगस्यानुपपत्तिप्रसङ्गाद्, अनुभवविरोधाच्च । अनुभवेऽपि हि ज्ञानस्येच्छाया वा कश्चिदवलम्ब प्रतीयत एव । तस्मात्प्रकाशरूपो मुख्य आत्मनाश्रयरूपेण भासते, तत्रैव च शब्देन भासमाना व्यापारकृत्यादय उपचारेण कथंचिदुपपाद्या इत्यपि स्वीकरणीयं स्यात् । अलमति प्रसक्तानुप्रसक्त्या । मुख्यं ज्ञानमात्मस्वरूपं नित्यम्, मनोवृत्यात्मकन्तु ज्ञानं मनसः परिणतिरिति क्रियात्वं नातिक्रामति, मुख्यामुख्यशक्तिरूपमनोवृत्तिरूपा तु क्रियैवेति स्फुटमुपपादितम्, मान्यानां ग्रन्थकृतां सम्मतिश्चापि तत्र प्रदर्शितेति ।

ननु कृतिजन्यत्वनिराकरणेन क्रियात्वमपि निराकृतप्रायमितिचेन्न शरीरक्रियाणामपि निश्वासादीनामनन्तरं परिपाकादीनां कृतिजन्यत्वाभावेऽपि क्रियात्वं न केनापि निराकर्तुं शक्यमिति तद्वदेव मानसानामपि ज्ञानेच्छादीनां वृत्तिरूपाणां क्रियासामान्ये प्रवेशो न निवारयितुं शक्य । नैयायिका हि देशत्यागमेव क्रियालक्षणमुपगच्छन्तीति ते ज्ञानादीनां क्रियात्वं नाद्रियते, तथापि क्रियापर्यायान् क्षणिकत्वादींस्तत्राप्युपयन्त्येव । ये त्वन्ये दार्शनिकाः परिणतिमपि क्रियामेव मन्यन्ते—तन्मते मनोवृत्तीनां हर्षसुखादीनामपि च मनःपरिणतिरूपाणां क्रियात्वमव्याहतमेव । ततश्च हर्षदुःखविषादादीनामपि मानसक्रियात्वम्, स एव च कारिकायां सत्ता-

त्रिगुणरूपतया व्याख्याता इति तेनापि सत्त्वादीनां क्रियात्वम्, क्रिया प्रागवस्थारूपत्वमेव वा सिध्यति, प्रीतिपदवाच्यं सुखं यद्यपि वेदान्ते-ष्वात्मस्वरूपतयाम्नायते, आनन्दस्य तत्र ब्रह्मरूपतया विवरणात्, तस्यैव च सुखपदवाच्यत्वात्, तथापि ज्ञानेच्छादाविवात्रापि अनुभूयप्राप्त्या सुखाकारान्तःकरणवृत्ति पूर्वमुदेति, तत्र चानन्द आत्मा प्रतिबिम्बत इत्येव क्रम उररीक्रियते दार्शनिकैः । रजसा चाञ्चल्यमाप्ते मनसि आत्मानन्दो न प्रतिबिम्बतीति आनन्दप्रतिरोधकत्वाद् रजसो दुःखरूपताख्यायते । तत्कटायां च क्रियायां पूर्वोक्तप्रकारेण रजोरूपं दुःखमपि न भासते, आनन्दप्रतिबिम्बस्य तु कथैव केति तत्रावसादो गुरुत्वं मनसो भवति । तत्तमोविषादरूपम् । सत्त्वे तु प्रारम्भिकी भवत्सा क्रियेति तत्रात्मरूप आनन्दः प्रतिबिम्बति, तत सत्त्वस्य सुखरूपताख्यायते, वृत्तिरूपं सुखमेव भवति, स्वरूपभूत आत्मानन्दस्तु न वेद्य, स केवलं सुखाकारवृत्ति-प्रकाशक इत्याद्या दार्शनिकी प्रक्रियाऽनुसन्धेया । एता सुखदुःखविषाद-रूपा वृत्तयो बाह्यानां येषां विषयाणां सम्बन्धेनाविर्भवन्ति, तेषु विषयेष्वपि सुखदुःखमोहादित्रयमनुस्यूतं शास्त्रा मन्यन्ते ।

सर्वेऽपि विषया सुखदुःखमोहेति त्रैगुण्येन समनुविद्धाः । तत्र कश्चित् पुरुषं प्रति कस्यचित् विषयस्य कदाचित् सुखरूपेण समुद्भवः । अपरं प्रति तस्यैव दुःखरूपेण, कञ्चित् प्रति च मोहरूपेण समुद्भव इति । यथा कांचित् सुन्दरी स्त्री स्वपतिं सुखयति, सपत्नीं दुःखयति, पुरुषान्तरं ताम-विन्दमानं च मोहयति इति श्रीवाचस्पतिमिश्रैः "आत्यन्तिकं सर्वं भावा व्याख्याता" इति तत्त्वकौमुद्यामुक्तम् । अत्र तामविन्दमानं पुरुषान्तरं वा मोहयतीत्युक्त्या मोहस्य तु न अनिवार्यसहचरत्वान्न कल्पितत्वमन्त्या, तथा

चोत्कटरूपता तैरभिव्यञ्जिता, तेनास्मदुक्ता प्रक्रिया प्रमाणीभवति। एवं सुखाद्यन्तरवृत्तिजनकत्वाज्जन्यजनकयोश्चाभेदाध्यवसायेन विषयाणामपि सुखादिरूपता साङ्ख्यग्रन्थेषु व्याख्यायते। पुराणेषु तु प्रायेणान्तरवृत्तितयैव सुखादीनां व्याख्यानं दृश्यते, श्रीमद्भगवद्गीतायामपि च। वेदान्तिनश्च विषयाणां सुखादिरूपतां निराकृत्य सुखादीनामान्तरत्वेन मनोवृत्तितामेवाचक्षते। लघुत्वचलत्वगुरुत्वादिधर्मस्तु बाह्येषु वस्तुषु सत्त्वादिगुणानुस्यूतता तद्रीत्या व्याख्येया। अहङ्कार एव साङ्ख्यमते मनस इन्द्रियाणां बाह्यानां विषयाणां च मूलमिति मनसो बाह्यैर्विषयैरेकमूलता तु सिद्धयत्येव, ततश्चान्तःकरणवृत्तिरूपा सुखाद्या यथा अहङ्कारस्यैव परम्परया जन्या इति मूलेऽहङ्कारे तन्मूले महत्यपि च तेषां स्वीकारः साङ्ख्यैः कृतः कार्यकारणयोरभेदात्, ततश्च तत्कार्येषु बाह्येषु भूतादिष्वपि सुखाद्यनुविद्धता तद्रीत्या सिद्ध्यत्येवेत्यास्तां तावत्। साङ्ख्यप्रवचनभाष्योद्धृते (१ अध्या०, १२७ सू० भाष्ये) श्रीपञ्चशिखाचार्यवचने अन्या अपि मनोवृत्तयः सत्त्वादिरूपतयोक्ताः, "सत्त्वं नाम प्रसादलाघवाभिष्वङ्गप्रीतितितिक्षासन्तोषादिरूपानन्तभेदम् समासतः सुखात्मकं, एवं रजोऽपि शोकादिनानाभेदं समासतो दुःखात्मकम्, एवं तमोऽपि निद्रादिनानाभेदं समासतो मोहात्मकमिति"। एवं च मनोवृत्तिरूपतया क्रियारूपत्वं सत्त्वादीनां स्फुटं भवतीति।

यत्तु विद्वत्प्रवरैः श्रीबालरामस्वामिभिस्तत्त्वकौमुदीव्याख्यायाम् "प्रीत्यप्रीतिविषादात्मकाः' इति कारिकापदम्—आत्मशब्दस्य स्वभावमर्थमङ्गीकृत्य प्रीत्यप्रीतिविषादस्वभावा तद्धर्मकाः सत्त्वादिगुणाः, अर्थात् सुखादिमन्तो धर्मिरूपा इति प्रसाधितम्, तदेतदनवधानात्। आत्मशब्दो हि

मुख्यतयास्वरूपबोधक एव, तत एव ईक्षत्यधिकरणे 'गौणश्चेन्नात्मशब्दात्' इति बादरायणीयसूत्रं भगवत्पादकृत तद्भाष्यं च संगच्छते "तदैक्षत एकोऽहं बहुस्याम" इत्यादौ श्रुतमीक्षितृत्व गौणम्—औपचारिकम्, अत प्रधानमेव जगत्कारणमिति साख्याना पूर्वपक्षं निराकर्तुमिदं सूत्रं प्रवर्तते। "अनेन जीवेनात्मनानुप्रविश्य" इति श्रुतौ पूर्वोक्तेनेक्षणकर्त्रा जीवस्य स्वात्मकत्वमुक्तम्, तदेतन्नोपपद्यते, ईक्षणस्य गौणत्वमगीकृत्य प्रधानस्य जगन्मूलत्वसाधने सूत्राशयः। "आत्मा हि नाम स्वरूपम्, न चाचेतनस्य प्रधानस्य चेतनो जीव. स्वरूपं भवितुमर्हति", इति तत्र भाष्यम्। उक्तरीत्या तु "आत्मनासत्त्वगुणपरिणामरूपतया स्वभावेन-स्वधर्मेण चैतन्यरूपेण जीवेनानुप्रविश्य" इति साख्यमतेऽपि श्रुति व्याख्यानसम्भवेन सूत्रं तद्भाष्यं च सर्वथा व्याकुप्येत। तस्मान्मुख्यतया-स्वरूपबोधक एवात्मशब्द। श्रीवालारामोद्धृते विश्वकोशे तु क्रमेण लोके प्रसिद्धिं गता लाक्षणिका अप्यर्था. संगृहीताः। देहस्यापि हि तत्रात्म-शब्दार्थत्वमुक्तम्-तच्चैकान्तत आस्तिकदर्शनशास्त्रविरुद्धमिति न स कोशो दार्शनिकनिर्णये उपयोगमावहति। तेन सुखादिरूपतया धर्मत्वमेव सत्त्वादीना गुणाना सम्भवति, नतु धर्मित्वम्। व्याख्याता च धर्मरूपतैव तेषां पुराणेषु आगमेषु आप्तैर्ग्रन्थकृद्भिश्च। यथा हि—

पावकस्योष्णतेवेयमुष्णांशोः पूर्वदीधितिः।
चन्द्रस्य चन्द्रिकेवेयं मायेयं सहजा ध्रुवा॥

इति शक्तिप्रकरण उदाहृतपूर्वम्। देवीभागवते च मायायाधर्मरूपतया उष्णतादिदृष्टान्तेन स्फुटैरक्षरैरेव मायाब्रह्मणोस्तत्त्वैक्यमेवेति स अस्मिन्नेव प्रकरणे साधितम्। एव पुराणान्तरेष्वपि सप्रोदाहृतेषु अने-

र्दाहकतेवेत्यादि शक्तिदृष्टान्त उक्तो धर्मरूपतामेव शक्ते साधयति, सैव च शक्तिरग्रे प्रकृतिरूपेण पुराणेषु विवृतेति तस्या अपि धर्मरूपत्वमेव पुराणाभिमत सिद्धयति। आगमशास्त्रेऽपि शक्तिरूपैव प्रकृति सर्वत्रा-स्थाप्यते। यथोक्त प्रपञ्चसारे—

प्रधानमिति यामाहुर्या शक्तिरिति कथ्यते।

( १ पटले, २६ श्लो० )।

शक्तिश्च धमरूपैव भवतीति न कस्याप्यत्र विवाद स्यात्। योगदर्शनेऽपि—"दृग् दर्शनशक्त्योरेकात्मतैवास्मिता" ( योग सू० पा० २ सू० ६ )। "स्वस्वामिशक्त्यो स्वरूपोपलब्धिहेतु सयोग" ( यो० पा० २, २३ सू० ) इति सूत्रयो शक्तिपदेनैव प्रकृतिस्तत्परिणतिभूता बुद्धिश्चोक्ता। पुरुषो दृक्शक्ति, बुद्धिर्दर्शनशक्ति, अनयोरेकाकारता-पत्तिरेवास्मिताक्लेश उच्यते" इति प्रथमसूत्रभाष्यम्। "पुरुष, स्वामी दृश्यते, स्वेन दर्शनार्थं सयुक्त, तस्मात, सयोगाद दृश्यस्योपलब्धिर्या स भोग' इति च द्वितीयसूत्रे। अत्र प्रथमसूत्रे बुद्धे, द्वितीयसूत्र प्रकृते शक्तिपदेन ग्रहण स्पष्टमेव। पुरुषोऽपि स्वय निर्धर्मक, प्रकृत्योत्थापितेषु धर्मितया भासमानेषु सासारिकेषु तत्त्वेषु जीवादिषु "चैतन्य धमरूपेणैव भासत" इति तस्यापि शक्तिपदेनैव योगसूत्रेषु व्यवहार कृत। पुरुषो ज्ञान शक्ति, स एव मुख्यज्ञानमिति बहुशो निरुपित प्राक्। प्रकृतिस्तु क्रिया-शक्तिरित्युभयो समेलनमेव जगद्रूपेण विजृम्भत इति साख्ययोगयोमतम्। तेन धर्मा एव धर्मिता गच्छन्तीति तन्मतसार। शक्तिभूतायां प्रकृतौ तु न धर्मान्तरकल्पनावकाश इति प्रकृत्यशभूताना सत्वादीना कथ धर्मित्व स्यात् अथ "विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि, इति ( यो०

सू० २।१९ ) गुणानामेव स्वरूपमाख्यातुं प्रवृत्ते सूत्रे चत्वारि पर्वाणि सत्त्वादीनां गुणानां व्याख्यातानि । अत्र स्थूलाज्जगतः सूक्ष्मदशायां प्रवेशयितुं कार्यरूपं प्रथममुदाहृतम्, अंतिमं तु रूपमत्रमुख्यम् । तत्रान्तिमतया ख्यातमलिङ्गं गुणानां स्वरूपम्, निःसत्तासत्तमिति भाष्यकृता व्याख्यातम् । तद्धि सत्त्वेन, असत्त्वेन वा वक्तुमशक्यम्, अग्राह्यत्वात् । बुद्धिरूपेण परिणतमेव तद् ग्राह्यं भवति, न तु प्रकृतिः स्वस्वरूपेण ग्राह्या भवति, केवलं बुद्धिजनकत्वेनानुमेया सेति तदभिप्रायः । तदेव गुणानां मुख्यरूपम् । तद्यदि धर्मिस्यात, कथमग्राह्यं निःसत्तासत्तं चोच्येत, धर्मिणो धर्मैः सदैव ग्राह्यत्वसम्भवात । द्वितीयं रूपं परसूत्रे तृतीयपर्वतया लिङ्गपदेनोक्तम् तृतीयं च रूपं द्वितीयपर्वतया अविशेषपदेन सूत्रोक्तं तदेतत् शब्दस्पर्शादितन्मात्रा, अहङ्कारश्चेति भाष्ये व्याख्यातम् । ते एते द्वे अपि रूपे स्वयं धर्मरूपे निर्धर्मके इत्यपि स्फुटम् । प्रथमपर्वतया विशेषपदेनोक्तम् स्थूलं रूपमेव धर्मितया लोके प्रतीयते । तेन प्रकृतेरंशाः सत्त्वादिगुणा मुख्यैस्त्रिभीरूपैर्धर्मरूपा एव भवन्ति ।

स एव स्थूलतायां धर्मितया व्यवह्रियते इति सुस्पष्टीभवतीति । तत्प्रकृतिरूपतायां धर्मित्वेन निरूपणं न कथमपि सम्भवति । एवमेव स्थूलभूतानां पञ्चरूपतया व्याख्यायते,"स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ( यो० सू० ३।४४ ) इति सूत्रेऽपि भूतानां प्रथममेव स्थूलरूपं धर्मितया व्याख्यातं भाष्यकृता । द्वितीयादीनिरूपाणि तु धर्मा एव, चतुर्थं रूपमन्वयपदेनोक्तम् ख्याति क्रियास्थितिशीलागुणाः कार्यस्वभावानुपातिनोऽन्वयशब्देनोक्ता, इति भाष्यकृता व्याख्यातम् । तेनापि धर्मरूपतैव गुणानां स्फुटीभवति । किं च प्रकृतेः प्रथमः परिणामो बुद्धिरिति सांख्ये स्वीक्रियते ।

तस्यादच स्वरूपम् धर्मोज्ञानं विराग ऐदवर्यमिति सात्विकम्, अधर्मः, अज्ञानम्, अवैराग्यम्, अनैदवर्यम्, इति च तामसमुक्तं साख्यकारिकायाम्। त एते सर्वेऽपि धर्मरूपा एव, तमसोरूपचतुष्टयं यदुक्तम्-तदेव अवैराग्यं रागद्वेषपदाभ्या द्विधाख्याय, अनैश्वर्यमस्मितापदेनोक्त्वा, अधर्मं चाभिनिवेशपदेनपरिवर्त्य - अविद्या - अस्मिता - राग - द्वेषाभिनिवेशा इति पञ्चक्लेशतया योगदर्शने निरूप्यते। तेषां चैषां पञ्चानां क्लेशानां प्रसुप्ततनुविच्छिन्नोदाराख्याश्चतस्रो वृत्तय आख्याता योगसूत्रे, ता एव वृत्तयो विचार्यमाणा न केवलं धर्मत्वमेव, प्रत्युत क्रियात्वमपि क्लेशानां व्यञ्जयन्ति क्रियाया एव प्रसुप्ततनुविच्छिन्नत्वादिवृत्तिसम्भवादिति वृद्धिरूपाणां क्लेशानां सिद्धेक्रियात्वे तत्प्रकृते क्रियात्वं केन वार्यताम्? एव तेः व्यक्तसूक्ष्मा गुणात्मान (यो०सू० ४।१३) इति सूत्रभाष्ये "ते खल्वमी त्र्यध्वानो धर्मा वर्तमाना व्यक्तात्मान—सर्वमिदं गुणाना सन्निवेशविशेष इ परमार्थतो गुणात्मान." इति गुणाना धर्मरूपता कण्ठत एव भाष्यकृतोक्त साख्यकारिकास्वपि प्रधानानुमानकथने "भेदाना परिमाणात् समन्वः शक्तितः प्रवृत्तेश्च, 'कारणमस्त्यव्यक्तम्' (सा० का० १५-१६) । कारिकाया शक्तित प्रवृत्ते इति योऽय हेतुरुपात्त', स इत्यमेव व्याख्युक्तः यत्सर्वाणि कार्याणि शक्त्या प्रवर्तन्ते, स्वकार्यजननसमर्थ भवन्ति इति सर्वैरेवाभ्युपगन्तव्यम्। अशक्तस्य कार्योत्पादनानुपपत्तेः सा च शक्तिर्न साख्यमतेऽतिरिक्त तत्त्वम्, अपितु कारण यत्कार्येऽनु तदेव कार्ये शक्तिरूप भवति तदाश्रित्यैव च कार्यं प्रवर्तते। नह्युपाः कारण परित्यज्य कार्यस्य किमपि स्वरूपमवतिष्ठते, यत्स्वकार्य जनं नहि तन्तून् परित्यज्य पट. प्रवृणुयात्। कार्यस्यानागतावस्था च क

शक्ति, तैलमनागतावस्थं तिलेषु वर्तत इत्येवं तिलेषु तैलोत्पादनशक्तिः, न सिक्तासु अनागतावस्थं तैलं विद्यते, इति न तत्र तैलोत्पादनशक्तिः।

तदित्थं कार्यकारणयोरेव मिथः शक्तित्वे स्थिते बुद्धिरूपं महत्तत्त्वं यस्स्वकार्यमहंकारं जनयितु प्रवर्तते, तत्र का नाम भवेत् कारणरूपा शक्तिः, यया तत्प्रवर्तेत, तच्च शक्तिरूपेणानुस्यूतम्। यदि प्रधानं न स्यात्, तर्हि महत्तत्त्वस्य शक्तित्वमपि न स्यात्, कारणस्य कस्यापि तत्रानुप्रवेशाभावाच्छक्तत्वमपि न स्यादिति तत्प्रवृत्तेरनुपपत्तिः प्रसज्जेत्। ततश्च तत्कारणत्वेन प्रधानमवश्यं कल्पनीयम्। तदेवशक्तिरूपेण महत्तत्त्वेऽनुप्रविष्टमिति तत्प्रवृत्तिरुपपद्यते। नन्वेवं प्रकृतेरपि कारणान्तरं सिद्ध्येत्, अन्यथा तस्या महत्तत्त्वजनकता न सिद्ध्येदितिचेन्नैवम्—प्रकृतेः स्वयं शक्तिरूपत्वेन तत्र शक्त्यन्तरान्वेषण न प्रसज्जत इति। अथ महत एव शक्तित्वं कुतो न स्वीक्रियते-येन प्रधानकल्पनापि न कर्तव्या भवेदिति शङ्कापरिहाराय तत्र 'परिमाणात्', 'समन्वयात्' इत्यादिहेत्वन्तरोपादनमिरयास्तामप्रकृतम्। प्रकृते. शक्तिरूपत्वमत्र स्वीकृतम्-तेन धर्मित्वं नोपपद्यते-इत्येवास्माकमभिप्रायः। साङ्ख्यप्रवचनभाष्येऽपि च 'प्रकृतिवास्तवे च पुरुषाध्यास सिद्धि' इति (अ० २, सू० ५)।

शक्तिशक्तिमतोर्भेदं पश्यन्ति परमार्थतः।
अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥

इति कूर्मपुराणवाक्यं विवृण्वता भाष्यकृता विज्ञानभिक्षुणा स्वशक्तौ प्रकृतौ वर्तमानं स्रष्टृत्वादिकं शक्तिमत्सु पुरुषेषूपचर्यते' इति प्रकृते शक्तित्वमुपगतम्। श्रीवाचस्पतिमिश्रैरपि तत्त्वकौमुद्यां 'प्रीत्यप्रीतिविषादात्मका' इति पूर्वोक्तकारिकाव्याख्याने प्रीतिः-सुखम्, प्रीत्यात्मकः सत्त्वगुण इत्यादिना

सुखादिरूपतैव सत्त्वादीनामुक्ता, न तु सुखादिमत्ता। अत्रेऽपि च तैरेव विषयेषु सुखादिरूपाणां व्यावर्तुमुपात्ते पूर्वोदाहृते स्त्रीदृष्टान्ते एवैकैव स्त्री रूपयौवनकुलसम्पन्ना स्वामिनं सुखीकरोति, तत्कस्य हेतोः, स्वामिनं प्रति तस्याः सुखरूपसमुद्भवात्। सैव स्त्री सपत्नीर्दुःखाकरोति, तत्कस्य हेतोः, ताः प्रति तस्याः दुःखरूपसमुद्भवादित्यादिना त्रिगुणात्मिकायाः स्त्रियाः सुखदुःखरूपेण समुद्भवो नाम परिणाम उक्त इति सुखादिरूपतैव सत्त्वादीनां व्याख्याता। अत्र च श्रीबालरामस्वामिभिरपि व्याचक्षाणैः कान्ताचेतोद्भूतधर्मरूपनिमित्तवशात् कान्तं प्रति भार्यायाः सुखात्मकसत्त्वगुणात्मकत्वेन प्रादुर्भावादित्यर्थः, एवमग्रेऽपि, इति सत्त्वादिगुणस्य सुखात्मकत्वम्, त्रिगुणायाः स्त्रियाश्चापि सुखरूपेण प्रादुर्भावो व्याख्यातः, न तु सुखवत्त्वं सत्त्वस्य व्याहृतम्। एवम्—'सत्त्वं रजस्तमसी अभिभूय शान्तात्मनो वृत्तिं प्रतिलभते' इति द्वादशकारिकाव्याख्यानरूपा तत्त्वकौमुदी व्याचक्षाणैरपि स्वामिभिः 'सुखादिरूपां शान्तां वृत्तिं प्रतिलभते प्राप्नोति, सुखादिरूपेण परिणमते इति यावत्, इति सुखरूपेण परिणामः सत्त्वस्योक्तः। तस्मात् 'प्रीत्यप्रीतिविषादात्मकाः', इत्यस्य व्याख्याने सुखादिधर्मकत्ववचनं तेषां धर्मधर्म्यभेदाभिप्रायेणैव नेयम् वस्तुतो धर्मरूपतैव गुणानामनुसन्धेया।

अथ सांख्यसूत्रभाष्यकृद्भिः श्रीविज्ञानभिक्षुमहाभागैस्तु 'सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः' इत्यादिसूत्रभाष्ये ( १ अ० ६१ सू० ) तदग्रे च सत्त्वादीनां स्पष्टतया द्रव्यत्वं व्यवस्थापितम्। सत्त्वादीनि द्रव्याणि, न वैशेषिका गुणाः, संयोगविभागवचनात्, लघुत्वचलत्वगुरुत्वादिधर्मकत्वाच्चेत्यादिना। अत्रे च लघ्वादिधर्मैः साधर्म्यं गुणानामिति

( १ अ० १२८ सूत्रभाष्य ) सत्वादीना प्रत्येक व्यक्तिरूपेण परिच्छिन्नत्व-मुक्त्वा, वैशेषिकोक्तपरमाणुवादादत्रको भेद इत्याशक्य मूलकारणस्य शब्दस्पर्शादिमत्वमस्माभिर्नेष्यते। वैशेषिकैस्तु परमाणुष्वपि मूलकारण-भूतेषु स्पर्शादिमत्वमभ्युपगम्यते-इत्येव भेदो व्यवस्थापित । नन्वेव मूल-कारणस्य परिच्छिन्नासख्यव्यक्तिकत्वे वैशेषिकमतादत्रको विशेष इति चेत्, कारणद्रव्यस्य शब्दस्पर्शादिराहित्यमेव—इति तदेतत्सवमविचार-मूलकमेव। वैशेषिकाणामारम्भवाद , ते हि लघोर्महत आरम्भ प्रथम-भूमिकाया शिक्षयन्ति, साख्यानान्तु परिणामवाद , ते शक्तेरेव मूलतत्त्वता विकासरूपा तत्परिणतिमेव च द्रव्यादिसर्व जगद् वैज्ञानिकप्रक्रियया प्रतिजानते। अतएव शब्दस्पर्शादिगुणविरहिताया एव शक्तेर्विकासरूपेण शब्दस्पर्शाद्युत्पत्तिमाचक्षते। यदि तु शक्तेर्विकासो नाभ्युपगम्यते, तर्हि स्पर्शादिरहितात्कारणात् स्पर्शादीनामुत्पत्ति कथ सम्भवेत। कथ च मूलकारणस्य शब्दस्पर्शादिराहित्य भाष्योक्तमुपपादयितु शक्येत, आरम्भ-वादे हि "कारणगुणा कार्यगुणानारभन्ते" इति प्रक्रियया कार्यद्रव्येषु गुणान् दृष्ट्वा कारणेऽपि तेषामनुमान स्यादिति वैशेषिका एव विजयेरन्। तस्मात् परिणामवादरूपे साख्यदर्शने प्रक्रियैव भिन्ना, आरम्भवादेन तुल-यितुमर्हा, हन्त, भाष्यकृद्भिरपि विज्ञानभिक्षुभिराचार्यैरारम्भपरिणाम वादयो र्भेदेऽपि नावधान कृतमित्याश्चर्यम्। भवतु नाम, नास्माक परदोष-निरीक्षणे प्रवृत्ति , महतामुक्तिमालोच्य सत्वादिषु द्रव्यरूपतासदेहो जिज्ञा-सूना मोदिमादिति तन्मतचर्चात्र कृता। शक्तिरूपैव प्रकृतिरिति तु प्रागेवो-पपादित दृढे प्रमाणे। साधर्म्य वैधर्म्य च सत्वादिगुणाना महदादिभि पुरुषैश्च यथासाख्यकारिकासु व्याख्याते, ते अपि द्रव्यत्वोपगमे न सगच्छेते।

हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥ (सां. का. १०)
त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥ (११)

इति कारिकाभ्यां व्यक्तमहदादिवैपरीत्येन अहेतुमत्त्वम्, नित्यत्वम्, व्यापकत्वम्, अक्रियत्वम्, एकत्वम्, अनाश्रितत्वम्, अलिङ्गत्वम्, निरवयवत्वम्, स्वातन्त्र्यं चाव्यक्तभूतायाः प्रकृतेस्तदात्मभूतानां सत्त्वादीनां च सिद्ध्यति। द्वितीयकारिकया च व्यक्तेषु महदादिषु प्रकृत्यात्मसु गुणेषु च त्रैगुण्यम्, अविवेकिता (पृथगनुपलभ्यमानता) विषयत्वम्, सर्वान् पुरुषान् प्रति साधारणत्वापरपर्यायं सामान्यम्, अचेतनत्वम्, प्रसवधर्मिता च सिद्ध्यति।

अत्रेदं विचार्यम्, एकत्वं त्रिगुणत्वं चोभयं कथमुपपद्यताम्। त्रयो गुणा एव प्रकृतिरिति सांख्यानामभ्युपगमः। यदि त्रयो गुणाः, तर्हि त्रिगुणरूपे अव्यक्ते एकत्वं कथं स्यात्। त्रित्वमेकत्व विरोधि, संख्याकृतव्यवहारस्य परस्परपरिहारेणैव प्रवृत्तिरित्यभियुक्ता आहुः। यद्यपि त्रित्वसंख्यासामान्ये-एकत्वमनुप्रविष्टम्, चतुष्ट्वादिष्वपि त्रित्वाद्यनुप्रविष्टम्, पर त्रयं दृष्ट्वा एकोऽयमिति न केनापि व्यवह्रियते, न वा चतुरः त्रय इमे इति कदाचिदपि व्यवहारो दृष्टः। तस्माद्द्वित्राद्या परा संख्या पूर्वां बाधते-इति वक्तव्यमेव भवेत्। इत्थं च त्रित्वं दृष्ट्वा एकत्वं न व्यवहर्तुं शक्येत। प्रत्येकं गुणानामेकत्वमिति चेद्व्याख्यायेत, तदा महदहंकारादि पदार्थेष्वासु व्यक्तेष्वपि प्रत्येकं स्वैकत्वमेवेति व्यक्तम्, अनेकम्-अव्यक्तं त्वेकमिति वैधर्म्यकथनानुपपत्तिः। एतत्समाधानाय श्रीबालरामस्वामिभिस्तत्त्वकौमुदी-

व्याख्याया सजातीयभेदशून्यत्वमेकत्व प्रकृतौ व्याख्यातम् । द्वितीया काचन प्रकृतिर्नास्ति, यामाधारीकृत्य सजातीयभेदः प्रकृतौ व्यपदिश्येत् । सत्वाद्या गुणा अपि प्रत्येकमेकव्यक्तिरूपा एवेति परस्परभिन्नत्वेन विजातीयभेदसत्वेऽपि सजातीयभेदस्तत्रापि नास्तीति तादृशमेकत्वमेव-त्राव्याहतम् । महदादिषु तु व्यक्तीनामानन्त्यमिति एक सजातीयभेदोऽस्त्येवेति वैधर्म्यमुपपादितं स्यात् । विज्ञानभिक्षुमहाभागस्तु सत्वादिगुणेष्वपि व्यक्तेर्भेदमिच्छति, अनन्तानि सत्वानि, अनन्तानि रजांसि, तमांसि च, तत्र धर्मैकत्वादेकत्वव्यपदेश । अत सर्गभेदेन भिन्नत्वाभाव एकत्वमिति तेन सूत्रभाष्ये एकत्वमुपपादितम् । सर्वमिदमाचार्यैरुपदिष्टस्यैकत्वस्यैव कल्पनया कदर्थितमेव, न तु वास्तविकमेकत्वमनया दिशोपपादित भवति ।

किं च त्रिगुणसमुदायरूपाया प्रकृतौ निरवयवत्व कथमित्यपि विचारयितु-मापतति, यतो गुणास्तदवयवा इति कथं निरवयवत्व स्यात्—प्रत्येक गुणा निरवयवा इति चेत्—न प्रत्येक गुणस्याव्यक्तपदेन प्रकृतिपदेनवाभिधानं सांख्ये, अपि तु त्रिगुणसमुदायस्यैव । इह चाव्यक्तस्यैव, वैधर्म्यमुक्तम् । न तु प्रत्येक गुणानामिति नानुगुण्य वैधर्म्यस्य । यदि च प्रत्येक गुणेषु साधर्म्यं वैधर्म्यं समन्वीयेयाताम्—तर्हि त्रिगुणमिति साधर्म्यं कथमुपपद्येत् । न हि प्रत्येकं गुणाना त्रैगुण्यमस्ति भवदभिमत पार्थक्यानुपपत्तेः । तदर्थ-मवयवाना संयोग, स गुणानां नास्ति—अप्राप्तिपूर्विका प्राप्तिः संयोग उच्यते गुणास्तु न कदापि परस्परमप्राप्ता-अपितु संयुक्ता, तेषां नित्ययुक्तत्वादिति संयोगाभावस्तत्रोपपद्यत इति श्रीवाचस्पतिमिश्रैरनव-यवत्वं व्याख्यातम् । परमत्र "परस्परं गुणानां न संयोग —अप्राप्तेरभावात् पुरुषेण तु संयोगोऽभवत्येवेति श्रीवाचस्पतिभिरेवोक्तम्, 'पुरुषस्य दर्शनार्थम्"

इति ( सां० का० २१ ) इति कारिकाव्याख्यानेऽपि च "अनादित्वाच्च संयोगपरम्परायाः" इति मिश्रैरेव व्याख्यातम्। यद्यपि प्रकृतिपुरुषयोः संयोगोऽनादिरिति न वक्तुं शक्यते, प्रलये संयोगानभ्युपगमात्, पुरुषसंयोग एव प्रकृतेः स्रष्टृत्वमिति सांख्यानामभ्युपगमः, अन्येषामीश्वरकालादीनां तत्रानभ्युपगमात्। ततश्च प्रलयकालेऽपि यदि संयोगः स्यात् तदा सृष्टिरपि प्रवर्तेत, भोगश्चापि भवेदिति। तथापि प्रलयात् पूर्वमपि संयोग आसीदिति संयोगपरम्परानादिभूतेति श्रीवाचस्पतेराशयः। ततश्चाप्राप्तिपूर्वकरूपोऽपि संयोगस्तैरभ्युपगत इति तदुक्तार्थानुसारेणापि अनवयवत्वं प्रधानस्य न सिद्ध्यति। असंयोगित्वमेवानवयवत्वं तैरुक्तम्, पुरुषसंयोगेऽपि असंयोगित्वं नास्तीति। "चलं च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चितेरभिसम्बध्यते" इत्यादिना बहुत्र योगभाष्ये, "स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः" ( योग सू० २।२३ ) इति बहुत्रयोगसूत्रेष्वपि च संयोग उपपादितः। "न शुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते" ( सा सू० १।१९ ) इति सूत्रभाष्ये श्रीविज्ञानभिक्षुभिस्तु "प्रकृते परिच्छिन्नापरिच्छिन्नविविधगुणसमुदायरूपतया परिच्छिन्नगुणावच्छेदेन पुरुषसंयोगोत्पत्तेः सम्भवात्, इति क्रियापूर्वकोऽपि संयोगोऽभ्युपगतः। परिच्छिन्नानां गुणव्यक्तीनां क्रियया अन्यतरक्रियाजन्यो नित्यः संयोगोऽपि संभवतीत्येव समाधानसम्भवात्। "वाङ्मात्रं न तु तत्त्वं चित्तस्थितेः" । (सां० सू० १।५८) इति सूत्र भाष्येऽपि "अस्मै पुरुषाय प्रकृतिरविवेकेनात्मानं दर्शितवती, तद्वासनावत्त्वात् तमेव संयोगद्वारा बध्नाति नान्यम्। तथा यस्मै विवेकेनात्मानं दर्शितवती, तमेव स्ववियोगद्वारा मोचयति नान्यम्" इति भाष्यकृद्भिः संयोगविभागः स्पष्टमभ्युपगम्यते। ततश्च परस्परं गुणानां संयोगाभाव एवानवयवत्वादं

इति वा, अवयवसंयोगजन्यत्वाभावोऽनवयवत्वमिति वा व्याख्यायेत । तदिदं सर्वमनवयवशब्दस्य वदर्थनमेव, परस्परसंयोगाभावस्य शब्दार्थे कथमप्यप्रवेशात, सांख्ये नारम्भप्रक्रिया, अपितु परिणामप्रक्रियेतिपूर्वमुक्तम्, ततश्च महदहङ्कारावपि गुणानां क्रमिकौ परिणामाविति तत्राप्यवयवसंयोग-जन्यत्वं नास्तीति सावयवत्वव्यवस्थायम्यं कारिकायामुक्तमनयादिशा न निर्वहेत् । अथैव द्रव्यत्वस्वीकारे त्रिगुणसमुदायरूपाया प्रकृतेर्व्यापकत्वमपि कथं स्यात । द्रव्येष्वेकस्य स्थाने परो न निविशते–इति हि स्फुटं दृश्यते, ततश्च सत्वस्थाने न रज, रजस्तम स्थाने च न सत्वमिति चालनीन्याये-नैकस्यापि व्यापकत्वं न सिद्ध्येत् । परिच्छिन्नानां समुदायोऽपि न व्यापको भवितुमर्हति, समुदायस्यावयवानतिरिक्तत्वादिति कथं प्रकृतेर्व्यापकतोप-पाद्येत । अन्यदपि दृश्यताम्, प्रत्येकं गुणा एकैकव्यक्तिरूपा, न तत्र व्यक्ति-भेद इति श्रीवाचस्पतिमिश्राणामाशय प्रतीयते, विज्ञानभिक्षुभिस्तु प्रत्येकं गुणानामनन्तव्यक्तिरूपत्वं मुखत एवानेकत्र स्पष्टमुद्घुष्टम् । अनन्तासु व्यक्तिषु एकजातीयत्वात् सत्वादिपदव्यवहार इति तेऽभिप्रयन्ति । तत्राद्य-पक्षे गुणानां परस्परमविवेकित्वापरपर्यायमपार्थक्यं नोपपद्यते, परस्पर तादात्म्याद् विवेकोनास्तीति हि मिश्रव्याख्यातम् । एकस्मिन् द्रव्ये अन्ययो-स्तादात्म्यमस्ति, तथापि च तानिद्रव्याणि पृथग् भूतानि । किमेवं विधमिन्द्रजालं क्वचिद् दृष्टचरम् ? तथैवैकव्यक्तित्वे सत्वमिदानीं प्रवृद्धम्, रजस्तु ह्रसितम्, इति वृद्धिह्रासावपि कथमुपपाद्यौ द्रव्यत्वोपगमे, न हि वृद्धिर्नाम परिमाणस्तेषु रूपस्पर्शादिरहितेषूपपद्येत, ह्रासो वा कृशता, "एकश्च यदि परिपुष्ट परस्यापि स्थानमाक्रामेत् तर्हि पर एव गच्छेत्" परेणसंकोचमाधाय वर्धते स्थानं दत्तम्, तर्हि तादात्म्य

स क्व गच्छतु ? सर्वत्रापि विभवो गुणा व्याप्ता इति कुत्राप्यवकाशस्याभावात् ? तेन त्यक्ते च स्थाने आगच्छतु-अतिरिक्त शक्तीनामुत्पत्तेरभावात् । उत्पत्त्यभ्युपगमे वा नित्यत्वायोगात् । अभिभावक एव तद्देशमाक्रम्य तिष्ठतीति चेत्, प्रदेशवृद्धिह्रासयोगिनस्तस्याप्यनित्यत्वं प्रसज्जेत । अभिभवति नाम कार्यजननासमर्थं च करोति इति चेत् ? कार्यजननशक्तिस्तस्य परेण नाशितेत्यायातम् । ततश्च पूर्वोपपादितरीत्या शक्तिरूपत्वेन शक्त्येकमात्रत्वेन च सर्वैर्माख्याताना गुणानां शक्तिनाशे स्वरूपनाश एव प्रसक्त ।

सांख्याभ्युपगते सत्कार्यवादसिद्धान्ते च नाशो न सम्भवतीति कुत्र शक्तिर्गता ? कुतो वा पुनरागमिष्यति ? स्वसम्बद्धेऽन्यस्मिन् गुणे तादृशशक्तेरभावात् । न शक्तिर्नाशिता, अपित्वभिभूता शक्त्यभिभव एव गुणानां परस्परमभिभव उच्यत इति चेदायातोऽसि मार्गे, शक्तिरूपा एव तर्हि गुणा इति शब्दान्तरेण भवता स्वीकृतम्, गुणेषु द्रव्यरूपेषु शक्तिरतिरिक्ता, साभिभूतेति पक्षे तु शक्तेरतिरिक्तपदार्थत्वाभ्युपगमप्रसङ्ग । न हि सांख्ये शक्तिर्नाम कश्चिदतिरिक्त पदार्थ पञ्चविंशतावपठ्यते । कार्यस्यानागतावस्थैव शक्तिः, सैवाभिभूतेति चेदुच्येत्, तदपि न सम्भवति, अनागतस्याभिभवासम्भवात । वर्तमानमेव हि अभिभूयते-नानागतम्, तस्य स्वयमेवाभिभूतत्वेन अभिभूतेऽभिभवासम्भवात्, चिरावस्थायां तस्याः सम्पादितमित्यपि नोचितम् चिरावस्थानस्याभिभवपदार्थताया व्याप्यदृष्टपूर्वत्वात् । परिच्छिन्नद्रव्याणां समुदायस्य विभुत्वं न सम्भवतीति तत्रापि प्रश्नोऽवशिष्यत एव । एतत् समाधानम्-दैशिकाभावप्रतियोगितावच्छेदकावच्छिन्नत्वं परिच्छिन्नत्वम्, तदभावश्च व्यापकत्वमिति विज्ञानभिक्षुभिः परिच्छिन्न म

इत्येवं विवेके साधर्म्यवैधर्म्ये उच्यमाने स्वोपपादनार्थं क्रियारूपतां क्रियासमन्वितरूपतामेव वा गुणानामभिव्यञ्जयन्ति । किं च व्यक्तं सक्रियम्-अतद्वैधर्म्येणाऽव्यक्तन्तु निष्क्रियमित्यपि पूर्वोक्तकारिकायामुक्तम् । तत्राप्य-क्रियस्य प्रसवधर्मित्वम्, पुरुषेण संयोगविभागौ च कथमुपपद्येयाताम् । संयोगविभागौ च सर्वैर्व्याख्यातावित्युक्तमेवाधस्तात् । तत्र श्रीवाचस्पति-मिश्रैरेवं समाहितम्-यदत्र स्पन्दरूपैव क्रिया गृह्यते-सा च विभुषु गुणेषु नास्ति, परिणामरूपा तु क्रिया तत्राभ्युपगम्यत एवेति प्रसवधर्मित्वं न विरुद्ध्यते, परिणाम एव हि गुणानां प्रसवः, सत्सत्वेऽपि स्पन्दो नास्तीति प्रवृत्तेरक्रियत्वमुक्तमिति । संयोगविभागौ चापि तत्पुरुषसंबन्धित्वाभिमान-रूपावेवेति न तत्रापि स्पन्दापेक्षेत्यपि नैतत् समाधत्ते । परं "प्रकाश-प्रवृत्तिनियमार्थाः" ( सां० त० कौ० १२ का० ) इति कारिकांश-व्याख्यानावसरे मिश्रमहाभागैरेव "रजः प्रवर्तकत्वात् सर्वत्र लघु सत्त्वं प्रवर्तयेत्, यदि तमसा गुरुणा न नियम्येत, तमो नियतं तु क्वचिदेव प्रवर्तयतीति भवति तमो नियमार्थम्" इति व्याख्यातम्, तत्तु स्पन्दमन्त-भिव्यनक्त्येव । यत स्पन्दं विना प्रवर्तकत्वं नियामकत्वं चोपपद्येतेति । चलं च गुणवृत्तम्, चलं च रजः, इत्यादिषूद्धृतपूर्वेषु संयोगसाधना-योद्धृतेषु च वचनेषु बहुत्र स्पन्दः स्फुटं प्रतिभात एव । परिच्छिन्नैर्गुणैः संयोगविभागावुपपद्येते इति पूर्वोदाहृतवचने प्रतिपादितवता श्रीविज्ञान-भिक्षुणा तु स्पष्टमेव स्पन्दरूपापि क्रियाऽभ्युपगता । एतन्मतानुसारेणैवम् नियतकार्यकारित्वं सक्रियत्वम्, प्रधानस्य तु सर्वकार्यसाधारण्यान्न सक्रियत्वम्, इति तेन महाभागेन सक्रियत्वं परिष्कृतम् । परमेतन्नवमावार्योक्तिभिः प्रयास-प्रदर्शनमेव । नियतकार्यकारी सक्रियः, सर्वकार्यकारी तु निष्क्रिय इति

कियदुपहासास्पदमिदमिति विद्वांस एव विदाङ्कुर्वन्तु । सत्त्वादीनां क्रियाशक्तित्वाभ्युपगमे तु निष्क्रियत्वं सम्यगुपपन्नमेव । न हि क्रिया क्रियावती भवति, तत्रापरस्याः क्रियाया अभावात्‌ "गुणादिर्निर्गुणक्रियः" इति तार्किका अपि गुणकर्मादीनां निष्क्रियत्वमाचक्षते । अलमति विस्तरेण । सांख्याचार्यणामेव सत्त्वादिगुणनिरूपणं तेषां द्रव्यरूपत्वे धर्मिरूपत्वे वा नोपपद्यते । तस्मात्‌ क्रियाशक्तिरूपैव प्रकृतिः, क्रियाशक्तिरूपा एव च सत्त्वाद्या गुणास्तद्दशा इति स्वीकारेणैव सर्वा प्रक्रिया निर्वहति । तत्र पृथक्‌ पृथक्‌ शक्तिरूपाः सत्त्वादिगुणाः, तत्समष्टिरूपा तु त्रिगुणात्मिका प्रकृतिरिति समष्टिव्यष्ट्योः कथञ्चिद्‌ व्यावहारिकं भेदमुररीकृत्य गुणत्रयवती प्रकृतिरिति अभेददृष्ट्या तु त्रयो गुणा एव प्रकृतिरित्युभय-मप्युपपद्यते । श्रीभगवद्गीतास्वपि यत्—

सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः
निबध्नन्ति महाबाहो देहे देहिनमव्ययम्‌ । ( अ० १४।५ )

इत्युपदिष्टम्‌ । तत्र समष्टिरूपाया सुप्तदशायां भेदविरहेण वर्तमाना प्रकृतिः, जागरणे तु तत्र कार्यानुगुणतया पृथक्‌ पृथक्‌ शक्तिरूपेणाविर्भवन्तः सत्त्वाद्या गुणास्तत्प्रभवा उक्ताः । समष्टिसक्तेर्व्यष्टिरूपेण कार्यकरणाय पृथक्‌ पृथक्‌ भवनमेव सम्भवः । स च प्रसुप्तावस्थायाः प्रकृतेरवेति तज्जन्यत्वा-परपर्यायं तत्सम्भवत्वं व्यवहारदशायां स्पष्टीकरणायोपात्तम्‌ । तदनुसक्ते क्रियारूपेण परिणतिस्तु "निबध्नन्ति" इति आत्मनो बन्धकतयोक्ता । पृथक्‌ पृथक्‌ शक्तिभिः केन केनरूपेण बन्धनमिति चाग्रे विवृतम्‌ ।

तत्र सत्त्वं निर्मलत्वात्‌ प्रकाशकमनामयम्‌ ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ १४।६ ।

शक्तिरूपत्वाभ्युपगमे वा क्रियाया शक्तेर्वा निराश्रयावस्थानासंभवेन तस्या आश्रय कश्चन कल्पनीयो भवेत्, पुरुषस्याश्रयत्व तु सांख्या नेच्छन्त्येवेत्यतिरिक्ततत्त्वकल्पनाप्रसङ्ग आपततीति चेत्, सत्यम् । शक्ति. स्वतन्त्रा निराधारा च जगदुत्पादयतीत्येव सांख्यानां प्रक्रिया । तत एव ते तदाश्रयमन्यं न प्रकल्पयन्ति, पुरुष चौदासीन्यभङ्गभिया तदाश्रयं न मन्यन्त इति तन्मते शक्ते: स्वातन्त्र्योपगम इव निराश्रयत्वोपगमोऽपि न विरुद्ध्यते । क्रिया च तत्परिणतिभूता स्वरचितानेव द्रव्यादीनाश्रित्य तिष्ठतीति तन्त्र-प्रक्रियामनुसृत्य न कश्चिद्विरोध । तत: परभूमिकायां तु वेदान्तिन पुरुषबहुत्व शक्तिस्वातन्त्र्य च निराकुर्वन्तं ब्रह्मैव शक्त्यपरपर्यायमायाश्रय मन्यन्त एव । "आश्रयत्वविषयत्वभागिनी निर्विशेषचितिरेव केवला" इति तत्सिद्धान्तात्, तत्सिद्धान्ते शक्त्याश्रयत्वे तत्परिणतिभूतक्रियाश्रयत्वेऽपि च ब्रह्मणो नौदासीन्यहानि, विवर्तवादस्याविकृतपरिणामवादस्य वाभ्युपगमादिति न तत्रापि कोऽपि विरोध: ।

श्रीशंकरभगवत्पादैर्विवर्तवाद आश्रित., आगमेषु श्रीभगवद्वल्लभाचार्याणां मते चाविकृतपरिणामवाद एवाभ्युपगत. । अनयोरपि वादयो: केवलं दृष्टिभेद एव, न तु वास्तविक: कोऽपि विरोध: । "ब्रह्म सत्यम्, जगन्मिथ्या" इत्युक्तौ विकाररूपेण जगन्मिथ्या, ब्रह्मरूपेण तु सत्यम्, इत्युक्तौ च केवल वचनमात्रभेद., न तु वास्तविको भेद, श्रीशंकराचार्यैरपि विकारस्यैव मिथ्यात्व प्रतिपाद्यते, ब्रह्मणि जगद्रूपा विकृति: केवल प्रतीयते न तु कापि विकृतिरस्तीत्येव तैरुद्घोष:, "सर्वं खल्विदं ब्रह्म" इति श्रुत्युक्तब्रह्मरूपेण तु मिथ्यात्व कथ तैरभ्युपगम्यताम्, श्रीवल्लभाचार्या आगमिकाश्चापि ब्रह्मणस्तदपरपर्यायस्य परमशिवस्य वा निर्विकारतामुप-

त्स्येति न कोऽपि भेदो विरोधो वा, अविकृतपरिणाम , विवर्तश्चेति समानमेव भिन्नम् । तदिदं पुरस्तादप्युक्तम् । दर्शनेष्वपि च विकशिष्यमाणीकर्याय तास्ता भूमिका उपादीयन्ते, न तु वास्तविकः कोऽपि विरोधस्तत्रापीति स्थाने स्थाने सकेत्यते । "चेतनस्य पुरुषस्य सान्निध्य प्रकृतिरपेक्षते जगद्रूपेण तु सैव परिणमति, पुरुषो निर्विकार' इति साङ्ख्यानां प्रक्रिया । चेतनस्य ब्रह्मण परमशिवस्य वेच्छामात्रेण तच्छक्तिर्जगद्रूपेण विकासमाप्नोति, ब्रह्म परशिवो वा निर्विकार इति अविकृतपरिणामवादप्रक्रिया। सा च मूलतत्त्वस्येच्छापि जीवेच्छावन्नान्त -करणपरिणतिभूता, परिणतिभूतात्विच्छा उपाधिभूतायां मायायामेव स्यात्। इयं प्रकृतिप्रेरिका त्विच्छा तस्य स्वातन्त्र्यरूपा तद्रूपैव वेति स नि धानेनैव प्रेरकत्वमत्रापि फलितम् ।

यत्र तत्त्व न विहन्यते, निर्विकारतैव मूलतत्त्वे सदा तिष्ठति, स न परिणाम , अपि तु वाचारम्भण नाममात्र विकार इति विवर्तवादप्रक्रिया। लौकिकानामस्माकं दृष्टौ परिणाम स एव मन्यते, यत्र तत्त्व परिवर्तित स्यात् । यथा दुग्धस्य दधिभाव , बीजस्य वाङ्कुरभाव । स्वयमविकृतस्य परिणामस्तु न लोके दृष्ट इति न लौकिकानां बुद्धावुपारोहति, तस्मात्ता-मान्यदृष्टौ विवर्तस्याविकृतपरिणामस्य च न कोऽपि भेद । ततश्च शब्द-भेदातिरिक्त कोऽत्र भेद इति विचारकैरेव विचार्यताम् । प्राथयतायामपि नास्ति भेदो विरोधो वा । पुरुषबहुत्व तु लौकिकानुभवमनुसृत्य साङ्ख्यैरुपगतम्, तदग्रिमभूमिकायां निराकृत्यैक एव पुरुषो वेदान्तिभिरङ्गी क्रियते । अस्तु नाम । नात्र दार्शनिकीं सर्वामपि प्रक्रियामनुवदितुमस्त्ययमवसरो न वा तदवसर इति यावदुपयुक्त तावदेवात्र प्रसङ्गप्राप्त वदाम ।

पुराणेष्वपि प्रकृतिस्वातन्त्र्यं न क्वापि निरूप्यत इति प्रागेवावोचाम। तस्माद् वेदान्तिप्रक्रियैव तेषामभिमता प्रतीयते। न्यायशास्त्रन्तु प्रथमभूमिकायामारम्भवाद शिक्षासौकर्यायोपात्त इत्यसकृदुक्तमेव।

द्रव्यगुणक्रियायां वास्तविकाभेदप्रतिपादनम्। वस्तुतो द्रव्यगुणकर्मपरिभाषापीयं वैशेषिकदर्शने पूर्वभूमिकायां शिक्षणार्थमेवोपादीयते, गुणक्रिये परस्परं भिन्ने, द्रव्यं च तदाश्रयीभूत तत. पृथगेवेत्यादि। अग्रिमभूमिकामाश्रयत्सु दर्शनान्तरेषु तु नेयं परिभाषोपयुज्यते। तत्र हि क्रियैव धारावाहिकतां गता गुणपदवाच्या भवति, गुणसमष्टिरेव च द्रव्यमिति पौराणिकयां सृष्टावप्यस्ति विचारस्यास्योपयोग इत्येतदपि मनाग् विविच्यते। बुद्धिः, सुखम्, दु:खम्, इच्छा, द्वेष, यत्न, इति षट् ते मन.परिणतिरूपा इति क्रियायामेव तदन्तर्भावः प्रागेव विस्तरेण व्याख्यात.। मनस क्रियैव मन.परिणतिर्नाम। क्रियापदेन च क्षणिकत्वमेषां नैयायिकैरप्युच्यते-इति क्रियासमानधर्मतया क्रियात्वं तैरपि स्वीकृतप्रायम्। अहं जानामि, इच्छामि, इत्यादिलौकिकानुभवमनुसृत्यात्मधर्मत्वमेषां नैयायिकैरुपात्तम्। आत्मनि च विभौ क्रिया नोपपद्यत इत्येव हेतोर्गुणत्वस्वीकार एषां तैः कृतः।

अन्त करणवृत्तित्वमेषामभ्युपगच्छतां साङ्ख्यादीनां क्रियात्वाभ्युपगमे न काप्यापत्ति। एवमेव रतिहासशोकक्रोधाद्या या वृत्तयः स्थायिभावनाम्ना व्यभिचारिभावनाम्ना च साहित्यशास्त्रेऽभ्युपगताः, या नैयायिकैः कृच्छ्रेण स्वाभिमतेषु षट्स्वात्मगुणेष्वन्तर्भाव्यन्ते, ता अपि मनोवृत्तिविशेषा धारावाहिकतां गता इति स्थायितया प्रतीयमाना क्रिया एव। भवन्तु वा शक्तिरूपाः, शक्तेरपि क्रियापूर्वावस्थारूपतया क्रियान्ति-

रेकात। साङ्ख्यैर्बुद्धिरेका स्थिरा मन्यते, ज्ञानेच्छाद्यास्तदवृत्तय सा बुद्धिरपि धारावाहिको क्रिया क्रियाशक्तिर्वा नातिरिच्यते क्रियात्वात। भावनाख्य सस्कारोऽपि धारावाहिकता गता ज्ञानस्य सूक्ष्मावस्थैवेति ज्ञानवत् सोऽपि क्रियारूप । एव धर्माधर्मौ, कृतस्य शुभाशुभकर्मण सूक्ष्मावस्थारूपौ धारावाहिनाविति कथं क्रियात्वमतिवर्तेयाताम्। क्रिया-या पूर्वावस्था उत्तरावस्था च क्रियारूपैव विचारेण पर्यवस्यतीति ।

तदित्थम्-आत्मनो नवापि गुणा स्फुट क्रियारूपतां नातिक्रामन्ति। सस्कारस्य यौ द्वावन्यौ प्रभेदौ भूतगतौ न्यायेऽभ्युपेयेते वेग स्थितिस्थाप कश्च, तत्र वेग क्रियाया धारावाहिन्यवस्थेति स्फुटमेव । क्रिया हि धारावाहिनी क्रमेण तीव्रतामुपगच्छतीति सत्त्वादिनिरूपण प्रागुक्तम्। सैव तीव्रता वेग इत्युच्यते। स्थितिस्थापकोऽपि प्रतिबन्धकापनयने धारा वाहिन्या क्रियाया पुन प्रादुर्भाव । पार्श्वस्थितसजातीयवस्तुन आकर्षणस्य प्रतिफलन वेति स्फुट क्रियैव। गुरुत्वमाकर्षणग्रहणयोग्यतेति प्राक प्रतिपादितमेव। आकर्षण क्रिया, तदग्रहणमपि क्रिया, तर्हि तद्यो-ग्यतापि तस्या पूर्वावस्था क्रियैव । वस्तु स्वरूपमेव वा भवतु सा योग्यता न त्वतिरिक्त कोऽपि गुण स सिध्यति ।

इत्थ गुणाना क्रियारूपता द्रव्यस्य च गुण-समूहरूपत्व व्याख्यातम्।